॥३०॥३१॥ तु प्रजातित्यत्र पुत्रजातेति पाठे पुत्रवज्जाता परिवर्तितेति गूढोभिसन्धिः । पुत्रेति संबोधनं वा ॥३२॥३३॥३४॥गृह्य गृहीत्वा आविध्य भ्रामयित्वा अवधूय तुच्छीकृत्य ॥३५॥ उत्पतत् उदपतत् अनिष्पिष्टेति च्छेदः ॥३६॥ आदिश्य तिरस्कृत्य जगाम खमिति शेषः ॥३७॥३८॥३९॥४०॥ निशि काले इति शेषः । विपरीतेन विशेषेण

स तत्र त्वरितं द्वारि किं जातमिति चाब्रवीत् ॥ दीयतां शीघ्रमित्येवं वाग्भिस्समभितर्जयत् ॥ ३० ॥ ततो हाहाकृतास्सर्वा देवकीभवने स्त्रियः ॥ उवाच देवकी दीना बाष्पगद्गदया गिरा ॥ ३१॥ दारिका तु प्रजातेति कंसं समभियाचती ॥ श्रीमन्तो मे हतास्सप्त पुत्र गर्भास्त्वया विभो ॥३२॥ दारिकेयं हतैवैषा पश्यस्व यदि मन्यसे ॥ दृष्ट्वा कंसस्तु तां कन्यामाकृष्य तमुदायतः ॥ ३३ ॥ हतैवैषा यदा कन्या जातेत्युक्त्वा वृथामतिः ॥ सा गर्भशयने क्लिष्टा गर्भाम्बुक्लिन्नमूर्द्धजा ॥ ३४ ॥ कंसस्य पुरतो न्यस्ता पृथिव्यां पृथिवीसमा ॥ स चैनां गृह्य पुरुषस्समाविध्यावधूय च ॥ ३५ ॥ उद्यच्छन्नेव सहसा शिलायां समपोथयत् ॥ सावधूता शिलापृष्ठेऽनिष्पिष्टा दिवमुत्पतत् ॥३६॥ हित्वा गर्भतनुं सा तु सहसा मुक्तमूर्द्धजा ॥ जगाम कंसमादिश्य दिव्यस्रगनुलेपना ॥ ३७ ॥ हारशोभितसर्वाङ्गी मुकुटोज्ज्वलभूषिता ॥ कन्यैव साभवन्नित्यं दिव्या देवैरभिष्टुता ॥ ३८ ॥ नीलपीताम्बरधरा गजकुम्भोपमस्तनी ॥ रथविस्तीर्णजघना चन्द्रवक्त्रा चतुर्भुजा ॥ ३९ ॥ विद्युद्विस्पष्टवर्णाभा बालार्कसदृशेक्षणा ॥ पयोधरस्वनवती संध्येव सपयोधरा ॥ ४० ॥ सा वै निशि तमोग्रस्ते बभौ भूतगणाकुले ॥ नृत्यती हसती चैव विपरीतेन भास्वती ॥ ४१ ॥ विहायसि गता रौद्रा पपौ पानमनुत्तमम् ॥ जहास च महाहासं कंसं च रुषिताब्रवीत् ॥ ४२ ॥ कंस कंसात्मनाशाय यदहं घातिता त्वया ॥ सहसा च समुत्क्षिप्य शिलायामभिपोथिता ॥ ४३ ॥ तस्मात्तवान्तकालेऽहं कृष्यमाणस्य शत्रुणा ॥ पाटयित्वा करैर्देहमुष्णं पास्यामि शोणितम् ॥ ४४ ॥ एवमुक्त्वा वचो घोरं सा यथेष्टेन वर्त्मना ॥ खं सा देवालयं देवी सगणा विचचार ह ॥ ४५ ॥ सा कन्या ववृधे तत्र वृष्णिसंघसुपूजिता ॥ पुत्रवत्पाल्यमाना सा वसुदेवाज्ञया तदा ॥ ४६ ॥ विद्धि चैनामथोत्पन्नामंशाद्देवीं प्रजापतेः ॥ एकानंशां योगकन्यां रक्षार्थं केशवस्य तु ॥ ४७ ॥ तां वै सर्वे सुमनसः पूजयन्ति स्म यादवाः ॥ देववद्दिव्यवपुषा कृष्णस्संरक्षितो यया ॥ ४८ ॥ तस्यां गतायां कंसस्तु तां मेने मृत्युमात्मनः ॥ विविक्ते देवकीं चैव व्रीडितः समभाषत ॥४९॥ कंस उवाच ॥ ॥ मृत्योः स्वसः कृतो यत्नस्तव गर्भा मया हताः ॥ अन्य एवान्यतो देवि मम मृत्युरुपस्थितः ॥५० ॥

परितः प्रसर्पणेन ॥४१॥४२॥४३॥४४॥४५॥४६॥ एका चासावनंशेति एकानंशा भगवता एका सती अविभक्ता अज्ञस्तु तेनैकः सन्नपि स्वाविद्यया ततो विभक्तो भवति इयं तु न तथा यतः योगकन्या योगेन कन्या भूता चित्कलैवेयमित्यर्थः । इति तां विद्धि॥४७॥सुमनसः सुराः।यादवाः यदुषु जाताः॥४८॥४९॥मृत्योः परिहारार्थमिति शेषः॥५०॥

नैराश्येन कार्कश्येन ॥ ५१ ॥ हेतुभूतः शस्त्रवत् कालाख्यस्य ईश्वरस्य प्रयोज्यः ॥ ५२ ॥ ५३ ॥ यथाभागं यथाकर्मेत्यर्थः । तेन ईश्वरेपि न दोषः यथोक्तं, स्वकर्मैव नरं हन्ति न शस्त्ररिपुमृत्यवः ॥ न भेतव्यं न वा सभ्यं चोरहत्यावलम्बत इति । एवं सति मयि दोषो नासंजनीय इति भावः ॥ ५४ ॥ संस्थितिः खण्डनम् ॥५५॥५६॥ वत्सेति संबोधनात् कंसादियं ज्येष्ठेति गम्यते ॥ ५७ ॥ ५८ ॥ सहनीयं सोढव्यं क्षान्तमित्यर्थः ॥ ५९ ॥ ६० ॥ ६१ ॥ मृत्योर्दैन्यस्य कारणं मद्धतं ते तव हृदि मा भूदि-



नैराश्येन कृतो यत्नस्स्वजने प्रहृतं मया ॥ दैवं पुरुषकारेण नचातिक्रान्तवानहम् ॥५१॥त्यज गर्भकृतां चिन्तां संतापं पुत्रजं त्यज ॥ हेतुभूतस्त्वहं तेषां सति कालविपर्यये ॥ ५२ ॥ काल एव नृणां शत्रुः कालश्च परिणामकः ॥ कालो नयति सर्वं वै हेतुभूतस्तु मद्विधः ॥ ५३ ॥ आगमिष्यन्ति वै देवि यथाभागमुपद्रवाः ॥ इदं तु कष्टं यज्जन्तुः कर्त्ताहमिति मन्यते ॥ ५४ ॥ मा कार्षीः पुत्रजां चिन्तां विलापं शोकजं त्यज ॥ एवंप्रायो नृणां योनिर्नास्ति कालस्य संस्थितिः ॥ ५५ ॥ एष ते पादयोर्मूर्ध्ना पुत्रवत्तव देवकि ॥ मद्गतस्त्यज्यतां रोषो जानाम्यपकृतं त्वयि ॥ ५६ ॥ इत्युक्तवन्तं कंसं सा देवकी वाक्यमब्रवीत् ॥ साश्रुपूर्णमुखा दीना भर्तारमुपवीक्षती ॥ उत्तिष्ठोत्तिष्ठ वत्सेति कंसं मातेव जल्पती ॥ ५७ ॥ देवक्युवाच ॥ ममाग्रतो हता गर्भा ये त्वया कामरूपिणा ॥ कारणं त्वं न वै पुत्र कृतान्तोप्यत्र कारणम् ॥ ५८ ॥ गर्भकृन्तनमेतन्मे सहनीयं त्वया कृतम् ॥ पादयोः पतता मूर्ध्ना स्वं च कर्म जुगुप्सता ॥ ५९ ॥ गर्भे तु नियतो मृत्युर्बाल्येपि न निवर्तते ॥ युवापि मृत्योर्वशगः स्थविरो मृत एव तु ॥ ६० ॥ कालभूतमिदं सर्वं हेतुभूतस्तु त्वद्विधः ॥ अजाते दर्शनं नास्ति यथा वायुस्तथैव च ॥ ६१ ॥ जातोप्यजाततां याति विधात्रा यत्र नीयते ॥ तद्गच्छ पुत्र मा ते भून्मद्धतं मृत्युकारणम् ॥ ६२ ॥ मृत्युनापहृते पूर्वं शेषो हेतुः प्रवर्त्तते ॥ विधिना पूर्वदृष्टेन प्रजासर्गेण तत्वतः ॥६३॥ मातापित्रोस्तु कार्येण जन्मतस्तूपपद्यते॥निशम्य देवकीवाक्यं स कंसस्स्वं निवेशनम् ॥ ६४ ॥ प्रविवेश स संरब्धो दह्यमानेन चेतसा ॥ कृत्ये प्रतिहते दीनो जगाम विमना भृशम् ॥ ६५ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥ ७ ॥

त्यर्थः ॥ ६२ ॥ विधिना गर्भाधानादिसंस्कारेण पूर्वदृष्टेन जन्मान्तरीयेण कर्मणा । प्रजाः सृजतीति प्रजासर्गः कालस्तेन तत्त्वतः लोकदृष्टनिमित्तेन इत्यादिना ॥ ६३ ॥ कार्येण दुरन्नादिसेवनेन जन्मतः जातिगुणेन च उपपद्यते परद्रोहादिकम् एतैः कारणैस्तेपि मृताः एतैरेव कारणैस्त्वं च कारित इति नात्र तव दोष इति भावः ॥ ६४ ॥ ६५ ॥ इति हरिवंशे विष्णुपर्वणि टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

अथास्मिन्पञ्चमेऽध्याये वसुदेवोपदेशतः ॥ सकुटुम्बस्य नन्दस्य व्रजे गमनमीर्यते ॥ १ ॥ प्रागेव प्रसवात्पूर्वमेव व्रजे प्रेषितामिति शेषः ॥ १ ॥ नन्दगोपं सुपुत्रस्त्रीकं मथुरां प्रति करं प्रदातुमागतमित्यर्थाद्भागवताच्च गम्यते ॥ २ ॥ गुणैर्जातकर्मादिसंस्कारैर्लिंप्याबाभ्यामेश्च ॥ ३ ॥ ४ ॥ प्रज्ञा दैवाधीनमिदमिति धीः ह्रियते भयादिनेति शेषः ॥ ५ ॥ ६ ॥ तत्त्वान्वेषी यथावदालोचयन् । बालद्रोहिणां स्वरूपमिति शेषः ॥ ७ ॥ नाम्ना नामार्थेन निरीक्षस्व यथा कृष्णस्तव चित्तं कर्षति स्नेहातिशयाद्वशीकरोति तथा संकर्षणोऽपि त्वां रमय-

॥ वैशम्पायन उवाच ॥ प्रागेव वसुदेवस्तु व्रजे शुश्राव रोहिणीम् ॥ प्रजातां पुत्रमेवाग्रे चन्द्रात्कान्ततराननम् ॥ १ ॥ स नन्दगोपं त्वरितः प्रोवाच
शुभया गिरा ॥ गच्छानया सहैव त्वं व्रजमेव यशोदया ॥ २ ॥ तत्र तौ दारकौ गत्वा जातकर्मादिभिर्गुणैः ॥ योजयित्वा व्रजे तात संवर्द्धय यथासुख-
म् ॥ ३ ॥ रौहिणेयं च पुत्रं मे परिरक्ष शिशुं व्रजे ॥ अहं वाच्यो भविष्यामि पितृपक्षेषु पुत्रिणाम् ॥ ४ ॥ योऽहमेकस्य पुत्रस्य न पश्यामि शिशोर्मुखम् ॥
ह्रियते हि बलात्प्रज्ञा प्राज्ञस्यापि सतो मम ॥ ५ ॥ अस्माद्धि मे भयं कंसान्निर्घृणाद्वै शिशोर्वधे ॥ तद्यथा रौहिणेयं त्वं नन्दगोप ममात्मजम् ॥
॥ ६ ॥ गोपायसि यथा तात तत्त्वान्वेषी तथा कुरु ॥ विघ्ना हि बहवो लोके बालानुत्रासयन्ति हि ॥ ७ ॥ सच पुत्रो मम ज्यायान्कनीयांश्च तवाप्य-
यम् ॥ उभावपि समं नाम्ना निरीक्षस्व यथासुखम् ॥ ८ ॥ वर्द्धमानावुभावेतौ समानवयसौ यथा । शोभेतां गोव्रजे तस्मिन्नन्दगोप तथा कुरु ॥ ९ ॥ बाल्ये
केलिकिलस्सर्वो बाल्ये मुह्यति मानवः ॥ बाल्ये चण्डतमस्सर्वस्तत्र यत्नपरो भव ॥ १० ॥ न च वृन्दावने कार्यो गवां घोषः कथंचन ॥ भेतव्यं तत्र
वसता केशिनः पापदर्शिनः ॥ ११ ॥ सरीसृपेभ्यः कीटेभ्यश्शकुनिभ्यस्तथैव च ॥ गोष्ठेषु गोभ्यो वत्सेभ्यो रक्ष्यौ ते द्वाविमौ शिशू ॥ १२ ॥ नन्दगोप-
गता रात्रिश्शीघ्रयानो व्रजाशुगः ॥ इमे त्वां व्याहरन्तीव पक्षिणस्सव्यदक्षिणम् ॥ १३ ॥ रहस्यं वसुदेवेन सोऽनुज्ञातो महात्मना ॥ यानं यशोदया
सार्द्धमारुरोह मुदान्वितः ॥ १४ ॥ कुमारस्स्कन्धवाह्यायां शिबिकायां समाहितः ॥ संवेशयामास शिशुं शयनीयं महामतिः ॥ १५ ॥ जगाम च विविक्तेन
शीतलानिलसार्पिणा ॥ बहूदकेन मार्गेण यमुनातीरगामिना ॥ १६ ॥ स ददर्श शुभे देशे गोवर्द्धनसमीपगे ॥ यमुनातीरसंबद्धशीतमारुतसेवि-
तम् ॥ १७ ॥ विरुतश्वापदै रम्यं लतावल्लीमहाद्रुमम् ॥ गोभिस्तृणविलग्नाभिस्स्यन्दतीभिरलङ्कृतम् ॥ १८ ॥

त्वित्यर्थः ॥ ८ ॥ ९ ॥ केलिकिलः स्वेच्छाविहारी ॥ १० ॥ घोषो गोपग्रामः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ शिबिकायाम् आन्दोलिकायां शिबिकायां सुखरूपायामिति पाठः । मृदुतू- लिकायामिति तस्यार्थः कशिपुशब्दसादृश्यात् ॥ १५ ॥ बहूदकत्वात् शीतलोऽनिलः सर्पत्यस्मिन् तेन शीतलानिलसार्पिणा ॥ १६ ॥ स ददर्श गोव्रजमिति पञ्चदशगतेनान्वयः ॥ १७ ॥ विशिष्टं रुतं येषां तैः श्वापदैर्विरुतश्वापदैः लता भुवि प्रसर्पन्त्यः कूष्माण्ड्यादयो वल्ल्यः आरोहणसापेक्षा द्राक्षादयः तत्सहिता महान्तो द्रुमा यस्मिन् । स्यन्दतीभिः प्रस्नवतीभिः ॥ १८ ॥

समानि तीर्थानि जलावतरणमार्गा येषु तादृशा जलाशया यत्र ॥ १९ ॥ भासाः गृध्राः तदनुसृतैः श्येनैः । आमिषादा वनबिडालादयस्तदनुसृतैस्ततोऽधिकबलैः सृगालादिभिश्च वृतम् मृगाश्चित्रव्याघ्रः ॥ २० ॥ २१॥ हम्भारवैर्गोशब्दैः ॥२२॥ वाटो वृत्तिस्थानं कण्टकपरिधिः वाटो मार्गवृत्तिस्थाने इति मेदिनी ॥२३॥ करीषं शुष्कगोमयचूर्णम् ॥२४॥ क्षेम्या लब्धलक्षणार्हाः भटास्तत्प्रचारेण बहुलं समृद्धिमत् । दामनी स्थूणद्वयाक्रान्तप्रान्ता स्थूलरज्जुः यस्यां दामान्यासज्यन्ते । गर्गरो मन्थनकुम्भः । गर्गरो मीनभेदे स्यान्मन्थन्यामपि गर्गरीति विश्वः ॥ २५ ॥ तक्रेत्यन्तं गोरसाधिक्यमुक्तम् । निस्स्रवो रेचनप्रणालिका तद्देशे शैवालेन मलिनं मण्डम् उपर्यागतः सारः ॥२६॥ गोपाः क्रीडन्त्यस्मिन्निति

समप्रचारं च गवां समतीर्थजलाशयम् ॥ वृषाणां स्कन्धघातैश्च विषाणोद्घृष्टपादपम् ॥१९॥ भासामिषादानुसृतैश्श्येनैश्चामिषगृध्नुभिः ॥ सृगालमृगसिंहैश्च वसामेदाशिभिर्वृतम् ॥ २० ॥ शार्दूलशब्दाभिरुतं नानापक्षिसमाकुलम् ॥ स्वादुवृक्षफलं रम्यं पर्याप्ततृणवीरुधम् ॥ २१ ॥ गोव्रजं गोरुतं रम्यं गोपनारीभिरावृतम् ॥ हम्भारवैश्च वत्सानां सर्वतः कृतनिस्वनम् ॥२२॥ शकटावर्तविपुलं कण्टकीवाटसंकुलम् ॥ पर्यन्तेष्वावृतं वन्यैर्बृहद्भिः पतितैर्द्रुमैः ॥ २३ ॥ वत्सानां रोपितैः कीलैर्दामभिश्च विभूषितम् ॥ करीषाकीर्णवसुधं कटच्छन्नकुटीमठम् ॥ २४ ॥ क्षेम्यप्रचारबहुलं हृष्टपुष्टजनावृतम् ॥ दामनीपाशबहुलं गर्गरोद्गारनिस्वनम् ॥ २५॥ तक्रनिस्स्रावमलिनं दधिमण्डार्द्रमृत्तिकम् ॥ मन्थानवलयोद्गारैर्गोपीनां जनितस्वनम् ॥ २६ ॥ काकपक्षधरैर्बालैर्गोपालक्रीडनाकुलम् ॥ सार्गलद्वारगोवाटमध्ये गोस्थानसंकुलम् ॥ २७॥ सर्पिषा पच्यमानेन सुरभीकृतमारुतम् ॥ नीलपीताम्बराभिश्च तरुणीभिरलंकृतम् ॥ २८ ॥ वन्यपुष्पावतंसाभिर्गोपकन्याभिरावृतम् ॥ शिरोभिर्धृतकुम्भाभिर्बद्धैरग्रस्तनाम्बरैः ॥ २९ ॥ यमुनातीरमार्गेण जलहारीभिरावृतम् ॥ स तत्र प्रविशन् हृष्टो गोव्रजं गोपनादितम् ॥ ३० ॥ प्रत्युद्गतो गोपवृद्धैस्स्त्रीभिर्वृद्धाभिरेव च ॥ निवेशं रोचयामास परिवर्ते सुखाश्रये ॥ ३१ ॥ सा यत्र रोहिणी देवी वसुदेवसुखावहा ॥ तत्र तं बालसूर्याभं कृष्णं गूढं न्यवेशयत् ॥ ३२ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि गोव्रजगमनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ वैशम्पायन उवाच ॥ तत्र तस्यासतः कालः सुमहानत्यवर्तत ॥ गोव्रजे नन्दगोपस्य बल्लवत्वं प्रकुर्वतः ॥ १ ॥ दारकौ कृतनामानौ ववृधाते सुखं च तौ ॥ ज्येष्ठस्संकर्षणो नाम कनीयान् कृष्ण एव तु ॥ २ ॥

क्रीडास्थानम् आखाडा इति भाषाप्रसिद्धम् ॥२७॥ २८ ॥ अग्रस्तनाम्बरैः काञ्चोली इति भाषाप्रसिद्धैः कञ्चुकैरुपलक्षिताः ॥ २९ ॥ ३० ॥ परिवर्ते शकटादिप्राकारे सुखकरे आश्रयस्थाने ॥ ३१ ॥ ३२ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां पञ्चमोऽध्यायः ॥ ५ ॥ षष्ठे त्वथैतदध्याये कृष्णेनाधःस्थितेनसः ॥ भञ्जनं पूतनायाश्च शोषणं समुदीर्यते ॥ ॥ १ ॥ तत्र असतः अप्रकाशमानस्य । बल्लवत्वं गोपत्वम् ॥ १ ॥ २ ॥

लोडितम् उन्मथितम् ॥१८॥१९॥ सर्वे सर्वात्मनीश्वरे । सर्वं समाप्नोषि ततोसि सर्व इति निर्वचनात्संज्ञाशब्दोयमतो नात्र सर्वनामसंज्ञा ॥२०॥२१॥ शकुनी पक्षिणी बकानुजात्वात् वेषधारिणी मनुष्यवेषधारिणीति कंसस्य धात्रीति व्रजस्थैः श्रुता॥२२॥२३॥२४॥प्रस्रवोत्पीडवर्षिणी प्रस्रवेन क्षीराधिक्येन यः स्तनयोरुत्पीडः पीडा तेन वर्षिणी ॥२५॥ ॥२६॥२७॥२८॥२९॥तत्र पूतनावधे हेतुं कारणं नाध्यगच्छन्त नाधिगतवन्तः नन्दादयः गोपा बालरूपा देवास्तु जानन्त्येवेत्याह । मंत्रः । हेतिः पक्षिणी न दभ्रात्यस्मानाहूर्चां

तयोः कथयतोरेवमब्रुवंस्तत्र दारकाः ॥ अनेन शिशुना यानमेतत्पादेन लोडितम् ॥ १८ ॥ अस्माभिस्संपतद्भिश्च दृष्टमेतद्यदृच्छया ॥ नन्दगोपस्तु तच्छ्रुत्वा विस्मयं परमं ययौ ॥ १९ ॥ प्रहृष्टश्चैव भीतश्च किमेतदिति चिन्तयन् ॥ नच ते श्रद्दधुर्गोपास्सर्वे मानुषबुद्धयः ॥ २० ॥ आश्चर्यमिति ते सर्वे विस्मयोत्फुल्ललोचनाः ॥ स्वे स्थाने शकटं स्थाप्य चक्रबन्धमकारयन् ॥ २१ ॥ वैशम्पायन उवाच ॥ कस्यचित्त्वथ कालस्य शकुनी वेषधारिणी॥धात्री कंसस्य भोजस्य पूतनेति परिश्रुता॥२२॥पूतना नाम शकुनी घोरा प्राणभयंकरी॥आजगामार्द्धरात्रे वै पक्षौ क्रोधाद्विधुन्वती॥२३॥ ततोर्द्धरात्रसमये पूतना प्रत्यदृश्यत ॥ व्याघ्रगम्भीरनिर्घोषं व्याहरन्ती पुनः पुनः ॥ २४ ॥ निलिल्ये शकटस्याक्षे प्रस्रवोत्पीडवर्षिणी ॥ ददौ स्तनं च कृष्णाय तस्मिन्सुप्ते जने निशि ॥२५॥ तस्याः स्तनं पपौ कृष्णः प्राणैस्सह विनद्य च ॥ छिन्नस्तनी तु सहसा पपात शकुनी भुवि ॥ २६ ॥ तेन शब्देन वित्रस्तास्ततो बुबुधिरे भयात् ॥ स नन्दगोपो गोपा वै यशोदा च सुविक्लवा ॥ २७ ॥ ते तामपश्यन्पतितां विसंज्ञां विपयोधराम् ॥ पूतनां पतितां भूमौ वज्रेणेव विदारिताम् ॥ २८ ॥ इदं किंत्विति संत्रस्ताः कस्येदं कर्म चेत्यपि ॥ नन्दगोपं पुरस्कृत्य गोपास्ते पर्यवारयन् ॥ २९ ॥ नाध्यगच्छन्त च तदा हेतुं तत्र कदाचन ॥ आश्चर्यमाश्चर्यमिति ब्रुवन्तोनुययुर्गृहान् ॥ ३० ॥ गतेषु तेषु गोपेषु विस्मितेषु यथागृहम् ॥ यशोदां नन्दगोपस्तु पप्रच्छ गतसंभ्रमः ॥ ३१ ॥ कोयं विधिर्न जानामि विस्मयो मे महानयम् ॥ पुत्रस्य मे भयं तीव्रं भीरुत्वं समुपागतम् ॥ ३२ ॥ यशोदा त्वब्रवीद्भीता नार्य जानामि किंत्विदम् ॥ दारकेण सहानेन सुप्ता शब्देन बोधिता ॥ ३३ ॥ यशोदायामजानन्त्यां नन्दगोपः सबान्धवः ॥ कंसाद्भयं चकारोग्रं विस्मयं च जगाम ह ॥ ३४ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि शिशुचर्यायां शकटभङ्गपूतनावधो नाम षष्ठोध्यायः ॥ ६ ॥

पदं कृणुते अग्निधाने शन्नो गोभ्यश्च पुरुषेभ्यश्चास्तु मा नो हिंसीदिह देवाः कपोत इति । हेतिरायुधवद्वधकारिणी पक्षिणी पूतनारूपा अस्मान् व्रजस्थान् न दभ्राति नाभिभवति प्रत्युत अग्निधाने जाठराग्नेर्धाने निमित्ते शिशोर्जाठरमग्निं स्तनदानेन तर्पयितुम् आहुत्वाम् आष गतिर्दीन्यादानेषु आषयति परलोकं गमयति मृत्युना ग्राहयति वा देहं दीपयति वा आर्द्रां कृष्णतनुस्तरयां पदं स्थानं कृणुते कृष्णं पाययितुं स्वमृत्युरूपां तां तनुं स्पृशति स्मेत्यर्थः ॥३०॥३१॥३२॥३३॥३४॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां षष्ठोध्यायः॥६॥

अथास्मिन्सप्तमेऽध्याये यमलार्जुनयोर्भिदा ॥ मध्यंगतेन कृष्णेन ध्वस्ताविवेति वर्ण्यते ॥१॥ काले रिङ्गिणौ जानुभ्यां रंहणशीलौ ॥१॥ अन्योन्यगतौ परस्परस्मिन्नन्तर्भूतौ एकमूर्तिधरौ एकशरीराविव ॥२॥ एकरूपौ अभिन्नौ सन्तौ निर्माणनिर्मुक्तौ जन्महीनौ ॥३॥ एकस्य कार्यस्य अन्तरं रहस्यं गतौ प्राप्तौ एककार्यनिष्ठावित्यर्थः ॥४॥ देवानां वृत्तान्तः सिद्धान्तः पापिष्ठा हन्तव्या यज्ञदानादिकं च प्रवर्त्तनीयमित्येवंरूपस्तदर्थं मानुषभूतौ देववृत्तान्तमानुषौ ॥५॥ व्यतिषक्ताभिर्मिश्राभिः । ग्रस्तौ पूर्णमास्यां चन्द्रोदये सूर्यस्यास्तम-

वैशम्पायन उवाच ॥ काले गच्छति तौ सौम्यौ दारकौ कृतनामकौ ॥ कृष्णसंकर्षणौ चोभौ रिङ्गिणौ समपद्यताम् ॥१॥ तावन्योन्यगतौ बालौ बाल्यादेवैकतां गतौ ॥ एकमूर्तिधरौ कान्तौ बालचन्द्रार्कवर्चसौ ॥२॥ एकनिर्माणनिर्मुक्तावेकशय्यासनाशनौ ॥ एकवेषधरावेकं पुष्यमाणौ शिशुव्रतम् ॥३॥ एककार्यान्तरगतावेकदेहौ द्विधाकृतौ ॥ एकचर्यौ महावीर्यावेकस्य शिशुतां गतौ ॥४॥ एकप्रमाणौ लोकानां देववृत्तान्तमानुषौ ॥ कृत्स्नस्य जगतो गोपौ संवृतौ गोपदारकौ ॥५॥ अन्योन्यव्यतिषक्ताभिः क्रीडाभिरभिशोभितौ ॥ अन्योन्यकिरणग्रस्तौ चन्द्रसूर्याविवाम्बरे ॥६॥ विसर्पन्तौ तु सर्वत्र सर्पभोगभुजावुभौ ॥ रेजतुः पांसुदिग्धाङ्गौ दृप्तौ कलभकाविव ॥७॥ क्वचिद्भस्मप्रदीप्ताङ्गौ करीषप्रोक्षितौ क्वचित् ॥ तौ तत्र पर्यधावेतां कुमाराविव पावकी ॥८॥ क्वचिज्जानुभिरुद्घृष्टैः सर्पमाणौ विरेजतुः ॥ क्रीडन्तौ वत्सशालासु शकृद्दिग्धाङ्गमूर्द्धजौ ॥९॥ शुशुभाते श्रिया जुष्टावानन्दजननौ पितुः ॥ जनं च विप्रकुर्वाणौ विहसन्तौ क्वचित्क्वचित् ॥१०॥ तौ तत्र कौतूहलिनौ मूर्द्धजव्याकुलेक्षणौ ॥ रेजतुश्चन्द्रवदनौ दारकौ सुकुमारकौ ॥११॥ अतिप्रसक्तौ तौ दृष्ट्वा सर्वव्रजविचारिणौ ॥ नाशकत्तौ वारयितुं नन्दगोपः सुदुर्दमौ ॥१२॥ ततो यशोदा संक्रुद्धा कृष्णं कमललोचनम् ॥ आनाय्य शकटीमूले भर्त्सयन्ती पुनः पुनः ॥ १३ ॥ दाम्ना चैवोदरे बद्ध्वा प्रत्यबन्धदुलूखले ॥ यदि शक्नोसि गच्छेति तमुक्त्वा कर्म साकरोत् ॥१४॥ व्यग्रायां तु यशोदायां निर्जगाम तताङ्गणात् ॥ शिशुलीलां ततः कुर्वन्कृष्णो विस्मापयन्व्रजम् ॥१५॥ सोऽङ्गणान्निःसृतः कृष्णः कर्षमाण उलूखलम् ॥ यमलाभ्यां प्रवृद्धाभ्यामर्जुनाभ्यां चरन्वने ॥ मध्यान्निश्चक्राम तयोः कर्षमाण उलूखलम् ॥ १६ ॥

यः तदुदये इन्दोरिति तयोरन्योन्यकिरणग्रस्तत्वम् ॥६॥ सर्पभोगभुजौ सर्पदेहतुल्यबाहू । कलभसदृशौ कलभकाविव स्वार्थे वा कः ॥ ७ ॥ पावकी अग्निपुत्रौ द्वौ कार्त्तिकेयाविवेत्यभूतोपमा ॥ ८ ॥ ९ ॥ विप्रकुर्वाणौ नवनीतचौर्यादिना उपकारं कुर्वाणौ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

तत्तरयेति । अर्जुनाभ्याम् अर्जुनौ उद्धर्तुमित्यर्थः । अत्रेदमाम्नायते।यत्र मन्थां विबध्नते रश्मीन् यमितवा इव । उलूखलसुतानामवेद्विन्द्र जल्गुलः तानो अद्य वनस्पती ऋष्वावृष्वे- भिः सोतृभिः इन्द्राय मधुमत्सुतमिति । यत्र उलूखले मन्थां मन्थानमिव मन्थानं लोकक्लेशकरं मां विबध्नते विशेषेण बध्नन्ति मातरः रश्मीनादाय रश्मिभिरित्यर्थः । यमितवा इव विनिगृहीतुमिव ननु वस्तुतो निग्रहीतुं मातृत्वेन मयि स्निग्धत्वात् ; तेन उलूखलेन सुतानां पीडितानां कर्मणि षष्ठी । उलूखलपीडितान् अस्मान् हे इन्द्र मोचनसमर्थ अव रक्ष । पा- दादित्वादाद्युदात्तमाख्यातम् । इन्दु एवमेव त्वं जल्गुलोसि पुनस्तु मुञ्चामीति जल्पितुम् मां च गोपिं त्रातुं लातुम् आदातुं स्वाधीनं कर्तुं च समर्थोसि यत अतोऽव मामित्यर्थः ।

तत्तस्य कर्षतो बद्धं तिर्यग्गतमुलूखलम् ॥ लग्नं ताभ्यां समूलाभ्यामर्जुनाभ्यां चकर्ष च ॥ १७ ॥ तावर्जुनौ कृष्यमाणौ तेन बालेन रंहसा ॥ समूल- विटपौ भग्नौ स तु मध्ये जहास वै ॥ १८ ॥ निदर्शनार्थं गोपानां दिव्यं स्वबलमास्थितः ॥ तद्दाम तस्य बालस्य प्रभावादभवद्दृढम् ॥ १९ ॥ यमु- नातीरमार्गस्था गोप्यस्तं ददृशुः शिशुम् ॥ क्रन्दन्त्यो विस्मयन्त्यश्च यशोदां ययुरङ्गनाः ॥ २० ॥ तास्तु संभ्रान्तवदना यशोदामूचुरङ्गनाः ॥ ए- ह्यागच्छ यशोदे त्वं संभ्रमात्किं विलम्बसे ॥ २१ ॥ यौ तावर्जुनवृक्षौ तु व्रजे सत्योपयाचनौ ॥ पुत्रस्योपरि तावेतौ पतितौ ते महीरुहौ ॥ २२ ॥ दृढेन दाम्ना तत्रैव बद्धो वत्स इवोदरे ॥ जहास वृक्षयोर्मध्ये तव पुत्रः सबालकः ॥ २३ ॥ उत्तिष्ठ गच्छ दुर्मेधे मूढे पण्डितमानिनि ॥ पुत्रमानय जीवन्तं मुक्तं मृत्युमुखादिव ॥ २४ ॥ सा भीता सहसोत्थाय हाहाकारं प्रकुर्वती ॥ तं देशमगमद्यत्र पातितौ तावुभौ द्रुमौ ॥ २५ ॥ सा ददर्श तयो- र्मध्ये द्रुमयोरात्मजं शिशुम् ॥ दाम्ना निबद्धमुदरे कर्षमाणमुलूखलम् ॥ २६ ॥ सा गोपी गोपवृद्धश्च समुपाप व्रजस्तदा ॥ पर्यागच्छन्त ते द्रष्टुं गो- पेषु महदद्भुतम् ॥ २७ ॥ जजल्पुस्ते यथाकामं गोपा वनविचारिणः ॥ केनेमौ पातितौ वृक्षौ घोषस्यायतनोपमौ ॥ २८ ॥ विना वातं विना वर्षं विद्युत्प्रपतनं विना ॥ विना हस्तिकृतं दोषं केनेमौ पातितौ द्रुमौ ॥ २९ ॥ अहो बत न शोभेतां विमूलावर्जुनाविमौ ॥ भूमौ निपतितौ वृक्षौ वितोयौ जलदाविव ॥ यदीमौ घोषरचितौ घोषकल्याणकारिणौ ॥ ३० ॥

एवं यदा तयोर्नु प्रार्थयन्नपि न मोचनं लभते तदा वनस्पतीनन्तरा गत्वा बन्धनदाम त्रोटितुं यावद्बलं करोति तावद्वनस्पती एव उन्मूलितौ भूत्वा पततः । तानो इति । त्रातौ नोऽ- स्माकं व्रजवासिनां वनस्पतिभूतौ अतिमात्रसिद्धौ यवपौ अर्जुनाख्यौ । तौ वनस्पती अद्य इन्द्राय इन्द्रं प्रति गन्तुं सुतं तदुन्मूलनेन आत्मानं पीडयन्तं तदेव मधुमत् अमृतयुक्तम् अतिसम्बद्धमित्यर्थः । यतः ऋष्वौ गतिमन्तौ युवां स्थावरत्वान्मुक्तौ स्थ इत्यर्थः । ऋष्वेभिर्गतिमद्भिर्जङ्गमैः जनैः सोतृभिरस्मद्बन्धनकरैरुपलक्षितौ ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ सत्योपयाचनौ प्रार्थितमददतेन देवतारूपौ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

विपुलाभ्यामर्जुनाभ्याम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ एतदिति। एवमादीत्यर्थः । अत्र तृणावर्त्तवधोपि पुराणान्तरादुपसंहर्त्तव्यः। तदुपबृंहिका श्रुतिस्तु। साकं यक्ष्म प्रपत चाषेण किकिदीविना साकं वा तस्य ध्राज्या साकं नश्य निहाकयेति ॥ खेचरत्वेन यक्षं पूज्यमिवात्मानं मनुते मिमीते तोलयति वा यक्ष्मः हे यक्ष्म राक्षस तद्वत्पीडकेति वा चाषेण तद्वर्णेन हरिणा तव हन्त्रा साकं प्रपत भूमाविति शेषः। किकिदीविना ज्ञः सन् दीव्यतीति किकिदीविः किधातोर्बाहुलकात् क्विप्रत्यये लिड्भावे च किकिर्विद्वान् तेन वा तस्य वायोर्ध्राज्या गत्या यया धूलिवात्यारूपया एनम् उपरि नीतवानसि तया साकं नश्य नाशं प्राप्नुहि निहाकया गत्या च साकं वा साहित्यं पतन एव ननु नाशे अतस्तेन सह पतितः सन् स्वयमेक एव नाशं प्राप्नुहीत्यर्थः । एवं देवैरुक्ते तृणावर्तः पपात ममारेत्यर्थः ॥ ३७ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अस्मिन्नथाष्टमेऽध्याये वनान्तरमियासतः ॥

नन्दगोप प्रसन्नौ ते द्रुमावेवं गतावपि ॥ यच्च ते दारको मुक्तो विपुलाभ्यामपि क्षितौ ॥ ३१ ॥ औत्पातिकमिदं घोषे तृतीयं वर्त्तते त्विह ॥ पूतनाया विनाशश्च द्रुमयोश्शकटस्य च ॥ ३२ ॥ अस्मिन् स्थाने च वासोयं घोषस्यास्य न युज्यते ॥ उत्पाता ह्यत्र दृश्यन्ते कथयन्तो न शोभनम् ॥ ॥ ३३ ॥ नन्दगोपस्तु सहसा मुक्त्वा कृष्णमुलूखलात् ॥ निवेश्य चाङ्के सुचिरं मृतं पुनरिवागतम् ॥ ३४ ॥ नातृप्यत्प्रेक्ष्यमाणो वै कृष्णं कमललोचनम् ॥ ततो यशोदां गर्हन्वै नन्दगोपो विवेश ह ॥ स च गोपजनस्सर्वो व्रजमेव जगाम ह ॥ ३५ ॥ स च तेनैव नाम्ना तु कृष्णो वै दामबन्धनात् ॥ गोष्ठे दामोदर इति गोपीभिः परिगीयते ॥ ३६ ॥ एतदाश्चर्यभूतं हि बालस्यासीद्विचेष्टितम् ॥ कृष्णस्य भरतश्रेष्ठ घोषे निवसतस्तदा ॥ ३७ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि शिशुचर्यायां यमलार्जुनभङ्गो नाम सप्तमोऽध्यायः ॥ ७ ॥ वैशम्पायन उवाच ॥ एवं तौ बाल्यमुत्तीर्णौ कृष्णसंकर्षणावुभौ ॥ तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ॥ १ ॥ नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ॥ बभूवतुर्वत्सपालौ काकपक्षधरावुभौ ॥ २ ॥ पणवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ॥ शुशुभाते वनगतौ त्रिशीर्षाविव पन्नगौ ॥ ३ ॥

तनूरुहसमुत्पन्ना वृकाः कृष्णस्य वर्ण्यते ॥ १ ॥ एवं तावित्यध्यायः। सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ अथाशयीत निर्ऋतेरुपस्थे धेनं वृका रभसा सो अद्युरित्यस्य मन्त्रस्योपबृंहणार्थः। मन्त्रार्थः । पुरूरवसं प्रत्युर्वशी वदति। सुदेवः शोभनस्वामिको व्रजः आद्यक्षरलोपेन वासुदेवो वा अद्य प्रपतेत् अद्यैव उपद्रवसमकालं गच्छेत् अनावृत् नास्ति आवृत् निरोधको यस्य तादृशोपि परावतं परमात् दूराद्दूरतरं गन्तवै गन्तुं उ निश्चितं प्रपतेदित्यन्वयः। अथ पक्षान्तरे यदि सुदेवो न प्रपतेत् तर्हि निर्ऋतेरुपस्थे शयीत अथ अथवा एनं व्रजं वासुदेवपरिजनं रभसा सोरभसाः वेगवन्तः वृकाः अद्युः भक्षयेयुः तस्माद्वासुदेवो वा तत्परिगृहीतो व्रजो वा वृकेभ्यो बिभेति अनन्तादृशेनापि इन्द्रियवृकेभ्यः सुतरां भेतव्यमिति भावः । इतः स्पष्टार्थं मूलम् ॥ १ ॥ २ ॥ पणवो हि तुम्बीफलोपेतो वाद्यविशेषः। आद्यपदात्तादृशं रुद्रवीणादिकं पणवाद्यमत एव त्रिशीर्षाविवेति दृष्टान्तः संगच्छते पर्णवाद्यमित्यपि पाठः ॥ ३ ॥

॥४॥५॥६॥ चञ्चूर्यन्तौ अत्यन्तं संचरन्तौ किशोराविव अश्वपोताविव ॥७॥८॥ अवगीतं नाशितम् भुक्तभोगं काननम् ॥९॥ काननानि उद्यानानि वनानि अरण्यानि आकाश-निकाशानि पत्रादिना शून्यानि ॥ १० ॥ परितो वृत्तचक्राकारः परिधिः अर्गलाश्च येषु तेषु परिवृत्तार्गलेषु ॥ ११॥१२ ॥ १३॥१४॥ निर्व्यञ्जनं शाकरूपादिहीनम् ॥१५॥



मयूराङ्गदकर्णौ तु पल्लवापीडधारिणौ ॥ वनमालाकुलोरस्कौ द्रुमपोताविवोद्गतौ ॥४॥ अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ॥ सशिक्यतुम्बक-रकौ गोपवेणुप्रवादकौ ॥५॥ क्वचिद्धसन्तावन्योन्यं क्रीडमानौ क्वचित्क्वचित् ॥ पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरेक्षणौ ॥६॥ एवं वत्सान्पालयन्तौ शोभयन्तौ महावनम्॥चञ्चूर्यन्तौ रमन्तौ स्म किशोराविव चञ्चलौ ॥७॥ अथ दामोदरः श्रीमान्संकर्षणमुवाच ह ॥ आर्य नास्मिन्वने शक्यं गोपालैः-स्सह क्रीडितुम् ॥ ८ ॥ अवगीतमिदं सर्वमावाभ्यां भुक्तकाननम् ॥ प्रक्षीणतृणकाष्ठं च गोपैर्मथितपादपम् ॥९॥ घनीभूतानि यान्यासन् काननानि वनानि च ॥ तान्याकाशनिकाशानि दृश्यन्तेद्य यथासुखम् ॥१०॥ गोवाटेष्वपि ये वृक्षाः परिवृत्तार्गलेषु च ॥ सर्वे गोष्ठाग्निषु गताः क्षयमक्षयवर्चसः ॥११॥ संनिकृष्टानि यान्यासन्काष्ठानि च तृणानि च ॥ तानि दूरावकृष्टासु मार्गितव्यानि भूमिषु ॥१२॥ अरण्यमिदमल्पोदमल्पकक्षं निराश्रयम् ॥ अन्वेषितव्यविश्रामं दारुणं विरलद्रुमम् ॥ १३ ॥ अकर्मण्येषु वृक्षेषु स्थितविप्रं स्थितद्विजम् ॥ संवासस्यास्य महतो जनेनोत्सादितद्रुमम् ॥१४॥ निरानन्दं निरास्वादं निष्प्रयोजनमारुतम् ॥ निर्विहङ्गमिदं शून्यं निर्व्यञ्जनभिवाशनम् ॥ १५ ॥ विक्रीयमाणैः काष्ठैश्च शाकैश्च वनसंभवैः ॥ उच्छ-न्नसंचयतृणैर्घोषोयं नगरायते ॥ १६ ॥ शैलानां भूषणं घोषा घोषाणां भूषणं वनम् ॥ वनानां भूषणं गावस्ताश्चास्माकं परा गतिः ॥१७॥ तस्मा-दन्यद्वनं यामः प्रत्यग्रयवसेन्धनम् ॥ इच्छन्त्यनुपभुक्तानि गावो भोक्तुं तृणानि च ॥ १८ ॥ तस्माद्वनं नवतृणं गच्छन्तु धनिनो व्रजाः ॥ न द्वारबन्धा-वरणा न गृहक्षेत्रिणस्तथा ॥ प्रशस्ता वै व्रजा लोके यथा वै चक्रचारिणः ॥ १९ ॥ शकृन्मूत्रेषु तेष्वेव जातक्षाररसायनम् ॥ न तृणं भुञ्जते गावो नापि तत्पयसेहितम् ॥ २० ॥ स्थलीप्रायासु रथ्यासु नवासु वनराजिषु ॥ चरावस्संहितौ गोभिः क्षिप्रं संवाह्यतां व्रजः ॥२१॥ श्रूयते हि वनं रम्यं पर्याप्तं तृणसंस्तरम् ॥ नाम्ना वृन्दावनं नाम स्वादुवृक्षफलोदकम् ॥ २२ ॥ अझिल्लिकण्टकवनं सर्वैर्वनगुणैर्युतम् ॥ कदम्बपादपप्रायं यमुना-तीरसंश्रितम् ॥ २३ ॥

॥१६॥१७॥ कर्त्तव्यमाह । तस्मादिति ॥१८॥ ननु पितृपर्यागता भूमिर्निर्धनापि सुखावहेत्युक्तेः कथं पूर्वस्थानं त्याज्यमित्याह । न द्वारेति । चक्रेण समुदायेन चरन्ति ते चक्रचारि-णो हंससारसादयः अनिकेता इत्यर्थः ॥१९॥ शकृन्मूत्रेषु तेष्वेव तृणेषु पतितेषु सत्सु ॥ २० ॥ स्थलीप्रायासु समभूमितुल्यासु निस्तृणास्वित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

स्निग्धवनं शीतानिलं चेति संबन्धः ॥ २४ ॥ २५।२६।२७ ॥ चरतो मृगादीनिति शेषः ॥२८॥२९॥३०॥३१॥३२ ॥ पञ्चबद्धाः पञ्चादिसंख्यया संहताः ॥३३॥३४ ॥ ॥ ३५ ॥ ३६ ॥ अगताः असंचाराः ॥ ३७ ॥ तदेवाह । एवमिति ॥ ३८ ॥ इति हरिवंशे विष्णुपर्वणि टीकायामष्टमोऽध्यायः ॥ ८ ॥ एतस्मिन्नवमेध्याये रामकृष्णेच्छया

स्निग्धशीतानिलवनं सर्वर्तुनिलयं शुभम् ॥ गोपीनां सुखसंचारं चारुचित्रवनान्तरम् ॥ २४ ॥ तत्र गोवर्द्धनो नाम नातिदूरे गिरिर्महान् ॥ भ्राजते दीर्घशिखरो नन्दनस्येव मन्दरः ॥ २५ ॥ मध्ये चास्य महाशाखो न्यग्रोधो योजनोच्छ्रितः ॥ भाण्डीरो नाम शुशुभे नीलमेघ इवाम्बरे ॥ २६ ॥ मध्येन चास्य कालिन्दी सीमन्तमिव कुर्वती ॥ प्रयाता नन्दनस्येव नलिनी सरितांवरा ॥ २७ ॥ तत्र गोवर्द्धनं चैव भाण्डीरं च वनस्पतिम् ॥ कालिन्दीं च नदीं रम्यां द्रक्ष्यावश्चरतस्सुखम् ॥ २८ ॥ तत्रायं कल्प्यतां घोषस्त्यज्यतां निर्गुणं वनम् ॥ संत्रासयावो भद्रं ते किञ्चिदुत्पाद्य कारणम् ॥ २९ ॥ एवं कथयतस्तस्य वासुदेवस्य धीमतः ॥ प्रादुर्बभूवुश्शतशो रक्तमांसवसाशनाः ॥ ३० ॥ घोराश्चिन्तयतस्तस्य स्वतनूरुहजास्तदा ॥ विनिष्पेतुर्भयकरास्सर्वशश्शतशो वृकाः ॥ ३१ ॥ निष्पतन्ति स्म बहवो व्रजस्योत्सादनाय वै ॥ वृकान्निष्पतितान्दृष्ट्वा गोषु वत्सेष्वथो नृषु ॥ ३२ ॥ गोपीषु च यथाकामं व्रजे त्रासोऽभवन्महान् ॥ ते वृकाः पञ्चबद्धाश्च दशबद्धास्तथा परे ॥ ३३ ॥ त्रिंशद्विंशतिबद्धाश्च शतबद्धास्तथा परे ॥ निश्चेरुस्तस्य गात्रेभ्यः श्रीवत्सकृतलक्षणाः ॥ ३४ ॥ कृष्णस्य कृष्णवदना गोपानां भयवर्धनाः ॥ भक्षयद्भिश्च तैर्वत्सान् त्रासयद्भिश्च गोव्रजान् ॥ ३५ ॥ निशि बालान्हरद्भिश्च वृकैरुत्साद्यते व्रजः ॥ न वने शक्यते गन्तुं न गाश्च परिरक्षितुम् ॥ ३६ ॥ न वनात्किंचिदाहर्तुं नच वा तरितुं नदीम् ॥ त्रस्ता ह्युद्विग्नमनसोऽगतास्तस्मिन्वनेऽवसन् ॥ ३७ ॥ एवं वृकैरुदीर्णैस्तु व्याघ्रतुल्यपराक्रमैः ॥ व्रजो निष्पन्दचेष्टस्स एकस्थानचरः कृतः ॥ ३८ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि शिशुचर्यायां वृकदर्शनो नामाष्टमोऽध्यायः ॥ ८ ॥ वैशम्पायन उवाच ॥ एवं वृकांश्च तान्दृष्ट्वा वर्धमानान्दुरासदान् ॥ सस्त्रीपुमान्स घोषो वै समस्तोमन्त्रयत्तदा ॥ १ ॥ स्थानेनेह न नः कार्यं व्रजामोन्यन्महद्वनम् ॥ यच्छिवं च सुखोष्यं च गवां चैव सुखावहम् ॥ २ ॥ अद्यैव किं चिरेण स्म व्रजामस्सह गोधनैः ॥ यावद्वृकैर्वधं घोरं न नस्सर्वो व्रजो व्रजेत् ॥ ३ ॥ एषां धूम्रारुणाङ्गानां दंष्ट्रिणां नखकर्षिणाम् ॥ वृकाणां कृष्णवक्त्राणां बिभीमो निशि गर्जताम् ॥ ४ ॥ मम पुत्रो मम भ्राता मम वत्सोथ गौर्मम ॥ वृकैर्व्यापादिता ह्येवं क्रन्दन्ति स्म गृहे गृहे ॥ ५ ॥

पुनः ॥ वृन्दावनप्रवेशश्च व्रजस्याद्भुत ईर्यते ॥ १ ॥ एवं वृकान् ॥ १ ॥ सुखोष्यं सुखावासम् ॥ २ ॥३॥ एषाम् एभ्यः सकाशात् ॥ ४ ॥ ५ ॥

॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अववुष्यत घोषो जातः भाण्डं शकटेष्विति शेषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥१७॥ पोतैः नौकाभिः ॥१८॥ ईरणम् ऊषरं शून्यमित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४॥ नियोगपाशैः मन्थनभाण्डस्थूणाया मन्थनदण्डेन संयोजनार्थैः पाशैः माञ्जेरेति महाराष्ट्रप्रसिद्धैः शिक्यै-



तासां रुदितशब्देन गवां हंभारवेण च ॥ व्रजस्योत्थापनं चक्रुर्गोपवृद्धाः समागताः ॥ ६ ॥ तेषां मतमथाज्ञाय गन्तुं वृन्दावनं प्रति ॥ व्रजस्य विनिवेशाय गवां चैव हिताय च ॥ ७॥ वृन्दावननिवासाय तान् ज्ञात्वा कृतनिश्चयान् ॥ नन्दगोपो बृहद्वाक्यं बृहस्पतिरिवाददे ॥ ८ ॥ अद्यैव निश्चयप्राप्तिर्यदि गन्तव्यमेव नः ॥ शीघ्रमाज्ञाप्यतां घोषः सज्जीभवत मा चिरम् ॥ ९ ॥ ततोऽवघुष्यत तदा घोषे तत्प्राकृतैर्जनैः ॥ शीघ्रं गावः प्रकल्प्यन्तां भाण्डं समभिरोप्यताम् ॥१०॥ वत्सयूथानि काल्यन्तां युज्यन्तां शकटानि च ॥ वृन्दावनमितः स्थानान्निवेशाय च गम्यताम् ॥११॥ तच्छ्रुत्वा नन्दगोपस्य वचनं साधु भाषितम् ॥ उदतिष्ठद्व्रजः सर्वः शीघ्रं गमनलालसः ॥ १२ ॥ प्रयाह्युत्तिष्ठ गच्छामः किं शेषे साधु योजय ॥ उत्तिष्ठेति व्रजे तस्मिन्गोपकोलाहलो ह्यभूत् ॥ १३ ॥ उत्तिष्ठमानः शुशुभे शकटीशकटस्तु सः ॥ व्याघ्रघोषमहाघोषो घोषः सागरघोषवान् ॥ १४ ॥ गोपीनां गर्गरीभिश्च मूर्ध्नि चोत्तम्भितैर्घटैः ॥ निष्पपात व्रजात्पङ्क्तिस्तारापङ्क्तिरिवाम्बरात् ॥ १५ ॥ नीलपीतारुणैस्तासां वस्त्रैरग्रस्तनोच्छ्रितैः ॥ शक्रचापायते पङ्क्तिर्गोपीनां मार्गगामिनी ॥१६॥ दामनी दामभारैश्च कैश्चित्कायावलम्बिभिः ॥ गोपा मार्गगता भान्ति सावरोहा इव द्रुमाः ॥१७॥ स व्रजो व्रजता भाति शकटौघेन भास्वता ॥ पोतैः पवननिक्षिप्तैर्निष्पतद्भिरिवार्णवः ॥ १८ ॥ क्षणेन तद्व्रजस्थानमीरणं समपद्यत ॥ द्रव्यावयवनिर्धूतं कीर्णं वायसमण्डलैः ॥ १९ ॥ ततः क्रमेण घोषस्स प्राप्तो वृन्दावनं वनम् ॥ निवेशं विपुलं चक्रे गवां चैव हिताय च ॥ २० ॥ शकटावर्त्तपर्यन्तं चन्द्रार्द्धाकारसंस्थितम् ॥ मध्ये योजनविस्तीर्णं तावद्द्विगुणमायतम् ॥ २१ ॥ कण्टकीभिः प्रवृद्धाभिस्तथा कण्टकितद्रुमैः ॥ निखातोच्छ्रितशाखाग्रैरभिगुप्तं समन्ततः ॥ २२ ॥ मन्थैरारोप्यमाणैश्च मन्थबन्धानुकर्षणैः ॥ अद्भिः प्रक्षाल्यमानाभिर्गर्गरीभिरितस्ततः ॥ २३ ॥ कीलैरारोप्यमाणैश्च दामनीपाशपाशितैः ॥ स्तम्भनीभिर्धृताभिश्च शकटैः परिवर्त्तितैः ॥२४॥ नियोगपाशैरासक्तैर्गर्गरीस्तम्भमूर्द्धसु ॥ छादनार्थं प्रकीर्णैश्च कटकैस्तृणसंकटैः ॥ २५ ॥ शाखाविटङ्कैर्वृक्षाणां क्रियमाणैरितस्ततः ॥ शोध्यमानैर्गवां स्थानैः स्थाप्यमानैरुलूखलैः ॥ २६ ॥ प्राङ्मुखैस्सिच्यमानैश्च संदीप्यद्भिश्च पावकैः ॥ सवत्सचर्मास्तरणैः पर्यङ्कैश्चावरोपितैः ॥ २७ ॥



र्वा कटकैर्घटाधारकतृणैः सहिताभिः तृणसंकटैः तृणमयीभिराच्छादनीभिः ॥ २५ ॥ शाखासु विटङ्काः पक्ष्युपवेशनस्थानानि तैः क्रियमाणैः ॥२६ ॥२७॥

॥ २८ ॥ २९ ॥ ३०॥३१ ॥ ३२ ॥ घर्मे ग्रीष्मे तत्रापि पश्चिमे आषाढे ॥ ३३ ॥ ३४ ॥ अध्यासत अध्यासितवन्तः ॥ ३५ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां नवमोऽध्यायः ॥ ९ ॥ एतस्मिन्दशमेऽध्याये प्रावृड्वर्णनमुच्यते ॥ श्रीनिवासाननासेन घोषोत्करस्तथा दिवः ॥ १ ॥ ताविति ॥ १ ॥ २ ॥३॥४॥५॥ ६ ॥ ७ ॥ कान्तानां क-

तोयमुत्तारयन्तीभिः प्रेक्षन्तीभिश्च तद्वनम् ॥ शाखाश्चाकर्षमाणाभिर्गोपीभिश्च समन्ततः ॥२८॥ युवभिस्स्थविरैश्चैव गोपैर्व्यग्रकरैर्भृशम् ॥ विशस-द्भिः कुठारैश्च काष्ठान्यपि तरूनपि ॥ २९ ॥ तद्वनस्थानमधिकं शुशुभे काननान्तरम् ॥ रम्यं वननिवेशं वै स्वादुमूलफलोदकम् ॥ ३० ॥ तास्तु कामदुघा गावस्सर्वपक्षिरुतं वनम् ॥ वृन्दावनमनुप्राप्ता नन्दनोपमकाननम् ॥ ३१ ॥ पूर्वमेव तु कृष्णेन गवां वै हितकारिणा ॥ शिवेन मनसा दृष्टं तद्वनं वनचारिणा ॥ ३२ ॥ पश्चिमे तु ततो रूक्षे घर्मे मासे निरामये ॥ वर्षतीवामृतं देवे तृणं तत्र व्यवर्द्धत ॥३३॥ न तत्र वत्सास्सीदन्ति न गावो नेतरे जनाः ॥ यत्र तिष्ठति लोकानां भवाय मधुसूदनः ॥ ३४ ॥ ताश्च गावस्स घोषस्तु स च संकर्षणो युवा ॥ कृष्णेन विहितं वासं तमध्यास-त निर्वृताः ॥ ३५ ॥ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि वृन्दावनप्रवेशो नाम नवमोऽध्यायः ॥ ९ ॥ वैशम्पायन उवाच ॥ तौ तु वृन्दावनं प्राप्तौ वसुदेवसुतावुभौ ॥ चेरतुर्वत्सयूथानि चारयन्तौ सुरूपिणौ ॥ १ ॥ पूर्णस्तु घर्मसमयस्तयोस्तत्र वने सुखम् ॥ क्रीडतोस्सह गो-पालैर्यमुनां चावगाहतोः ॥ २ ॥ ततः प्रावृडनुप्राप्ता मनसः कामरोपिणी ॥ प्रववुश्च महामेघाश्शक्रचापाङ्कितोदराः ॥ ३ ॥ बभूवादर्शनस्सूर्यो भू-मिश्चादर्शना तृणैः ॥ पतता मेघवातेन नवतोयानुकर्षिणा ॥ ४ ॥ संमार्जिततला भूमिर्यौवनस्थेव लक्ष्यते ॥ नाशितं जलदैरुष्णं तोषिता वसुधा जलैः ॥ ५ ॥ नववर्षावसिक्तानि शक्रगोपकुलानि च ॥ नष्टदावाग्निधूमानि वनानि प्रचकाशिरे ॥ ६ ॥ नृत्यव्यापारकालश्च मयूराणां कलापिना-म् ॥ मदरक्ताः प्रवृत्ताश्च केकाः पटुरवास्तथा ॥ ७ ॥ नवप्रावृषि कान्तानां षट्पदाहारदायिनाम् ॥ यौवनस्थकदम्बानां नवाम्रैर्भ्राजते वपुः ॥ ८॥ हासितं कुटजैर्वृक्षैः कदम्बैर्वासितं वनम् ॥ ( नाशितं जलदैरुष्णं तोषिता वसुधा जलैः ) ॥ संतप्ता भास्करकरैरभितप्ता दवाग्निभिः ॥ ९ ॥ जलै-र्वलाहकोत्सृष्टैरुच्छ्वसन्तीव पर्वताः ॥ महावातसमुद्धूतं महामेघगणार्पितम् ॥ मही महाराज पुरैस्तुल्यमापद्यते नभः ॥ १० ॥ क्वचित्कदम्बहासा-ढ्यं शिलीन्ध्राभरणं क्वचित् ॥ संप्रदीप्तमिवाभाति फुल्लनीपद्रुमं वनम् ॥ ११ ॥

दम्बानामिति सामानाधिकरण्यम् ॥ ८ ॥ हासितं विकाशितम् ॥ ९ ॥ उच्छ्वसन्तीव बाष्पमुद्गिरन्तीत्यर्थः । मही पुरैस्तुल्यं वपुरापद्यते तत्र दृष्टान्ते महावाताः पताकाः महामेघा महाप्रासादाः ॥ १० ॥ शिलीन्ध्राः छत्राकाः ॥ ११ ॥

क्षुभितमानसः कामातुरोभूत् ॥ १२ ॥ हंससारङ्गनादेन मत्तभ्रमरध्वनिना दर्दुरा भेकाः अवकीर्णा व्याप्ता ॥ १३ ॥ १४ ॥ संतता य आसारो धारासम्पातस्तेन निर्यत्नाः जडीकृताः । नगाग्राणि वृक्षशाखाग्राणि ॥ १५ ॥ तोयेन गम्भीराणि निबिडानि लम्बानि विस्तृतानि च तेषूदरेषु ॥ १६ ॥ महीरुहैर्मार्गचिह्नभूतैरन्वेष्यो जलच्छन्नो मार्गो यस्याः सा ॥ १७ ॥ १८ ॥ पल्वलेभ्य उत्कीर्णम् उत्सिक्तं यत्तोयं तेन वर्षेण ॥ १९ ॥ हस्तः शुण्डा तया सह उच्छ्रितं मुखं येषां ते हस्तोच्छ्रितमुखाः ॥ २० ॥ २१ ॥

ऐन्द्रेण पयसा सिक्तं मारुतेन च विस्तृतम् ॥ पार्थिवं गन्धमाघ्राय लोकः क्षुभितमानसः ॥१२॥ हंससारङ्गनादेन दर्दुरव्याहृतेन च ॥ नवैश्च शिखिविकुष्टैरवकीर्णा वसुंधरा ॥ १३ ॥ भ्रमत्तूर्णमहावर्त्ता वर्षप्रातमहारयाः ॥ हरन्त्यस्तीरजान्वृक्षान्विस्तारं यान्ति निम्नगाः ॥ १४ ॥ संततासारनिर्यत्नाः क्लिन्नयतोत्तरच्छदाः ॥ न त्यजन्ति नगाग्राणि श्रान्ता इव पतत्रिणः ॥ १५ ॥ तोयगम्भीरलम्बेषु स्रवत्सु च नदत्सु च ॥ उदरेषु नवाभ्राणां मज्जतीव दिवाकरः ॥ १६ ॥ महीरुहैरुत्पतितैः सलिलोत्पीडसंकुला ॥ अन्विष्यमार्गा वसुधा भाति शाड्वलमालिनी ॥ १७ ॥ वज्रेणेवावरुग्णानां नगानां नगशालिनाम् ॥ स्रोतोभिः परिकृत्तानि पतन्ति शिखराण्यधः ॥ १८ ॥ पतता मेघवर्षेण यथा निम्नानुसारिणा ॥ पल्वलोत्कीर्णमुक्तेन पूर्यन्ते वनराजयः ॥ १९ ॥ हस्तोच्छ्रितमुखा वन्या मेघनादानुसारिणः ॥ भ्रान्ता निवृष्टया मातङ्गा गां गता इव तोयदाः ॥२०॥ प्रावृट्प्रवृत्तिं संदृश्य दृष्ट्वा चाम्बुधरान्घनान् ॥ रौहिणेयो मिथः काले कृष्णं वचनमब्रवीत् ॥ २१॥ पश्य कृष्ण घनान् कृष्णान्बलाकोज्ज्वलभूषणान् ॥ गगने तव गात्रस्य वर्णचोरान्समुच्छ्रितान् ॥ २२॥ तव निद्राकरः कालस्तव गात्रोपमं नभः ॥ त्वमिवाज्ञातवसतिं चन्द्रो वसति वार्षिकीम् ॥ २३ ॥ एतन्नीलाम्बुदश्यामं नीलोत्पलदलप्रभम् ॥ संप्राप्ते दुर्दिने काले दुर्दिनं भाति वै नभः ॥२४॥पश्य कृष्ण जलोदग्रैः कृष्णैरुद्ग्रथितैर्घनैः ॥ गोवर्द्धनो यथा रम्यो भाति गोवर्द्धनो गिरिः ॥ २५ ॥ पतितेनाम्भसा ह्येते समन्तान्मददर्पिताः ॥ भ्राजन्ते कृष्णसारङ्गाः काननेषु मुदान्विताः ॥ २६ ॥ एतान्यम्बुप्रहृष्टानि हरितानि मृदूनि च ॥ तृणानि शतपत्राक्ष पत्रैर्गूहन्ति मेदिनीम् ॥ २७ ॥ क्षरज्जलानां शैलानां वनानां जलदागमे ॥ ससस्यानां च सीमानां न लक्ष्मीर्व्यतिरिच्यते ॥ २८ ॥ शीघ्रवातसमुद्धूताः प्रोषितौत्सुक्यकारिणः ॥ दामोदरोद्दामरवाः प्रागल्भ्यं यान्ति तोयदाः ॥ २९ ॥

॥ २२ ॥ चन्द्रो नभोवसतिं वसति आस्ते वार्षिकीं वर्षासंगाम् ॥ २३ ॥ दुर्दिने मेघच्छन्नेऽह्नि काले प्रावृट्काले दुर्दिनं मेघैराच्छन्नम् ॥ २४ ॥ गोवर्द्धनो नामतः गोवर्द्धनो गवां वर्द्धयिता ॥ २५ ॥ कृष्णसारङ्गा भ्रमराः ॥ २६ ॥ गूहन्त्याच्छादयन्ति ॥ २७ ॥ सीमानां कृष्टभूमीनां त्रयाणामपि लक्ष्मीर्न व्यतिरिच्यते नाधिका भवत्यपि तु समानैवेत्यर्थः ॥ २८ ॥ प्रोषितानां प्रवासिनाम् औत्सुक्यं गृहगमने तत्कारिणः ॥ २९ ॥ ॥ ११ ॥

हर्यश्वचापेन इन्द्रधनुषा रचितं मिश्रितं मध्यमं पदमन्तरिक्षम् ॥ ३० ॥ नभसि श्रावणे नभश्चक्षुः सूर्यः ॥ ३१ ॥ संसर्गः संबन्धः समुद्रौघनिभैः क्षुब्धैरित्यर्थः ॥ ३२ ॥ नीपाः कदम्बानामवान्तरजातयः पृथिव्यां सृष्टैरिति शेषः । कोलाहलाः कल्कलाः ॥ ३३ ॥ ३४ ॥ यैर्विद्युत्कवचैर्मेघैर्वर्मिणं वर्मवत्तुरस्त्वमार्षम् ॥ ३५ ॥ घनैर्निबिडैर्मेघैः ॥३६॥ गजा जलगजास्तेषामनीकैः ॥ ३७ ॥ उद्धूतम् उद्धूननम् कम्पिनः कम्पहेतवः सपृषतः सबिन्दवः उद्दामाः महान्तः । सपृषतोद्दामा इति सन्धिरार्षः ॥ ३८ ॥ सुप्तो अदृश्यः चन्द्रो यासु ॥ ३९ ॥ चेतनमिति । क्षुधाध्मातैर्वायुना पूरितैः कोशैश्चर्मकोशसदृशैर्मेघैरुपलक्षितं पुष्करमम्बरं चेतनमिव भातीति लुप्तोपमा । सर्वतश्चलद्भिर्मेघैर्नभोऽपि चलतीवे-

हरे हर्यश्वचापेन त्रिवर्णेन त्रिविक्रम ॥ विषाणज्येन रचितं तवेदं मध्यमं पदम् ॥३०॥ नभस्येप नभश्चक्षुर्न भात्येव चरन्नभः ॥ मेघैश्शान्तातपकरो
विरश्मिरिव रश्मिवान् ॥ ३१ ॥ द्यावापृथिव्योस्संसर्गस्सततं विततैः कृतः ॥ अव्यवच्छिन्नधारौघैस्समुद्रौघसमैर्घनैः ॥ ३२ ॥ नीपार्जुनकदम्बानां
पृथिव्यां चातिवृष्टिभिः ॥ गन्धैः कोलाहला वान्ति वाता मदनदीपनाः ॥३३॥ संप्रवृत्तमहावर्षं लम्बमानमहाम्बुदम् ॥ भात्यगाधमपर्यन्तं ससाग-
रमिवाम्बरम् ॥ ३४ ॥ धारानिर्मलनाराचं विद्युत्कवचवर्मिणम् ॥ शक्रचापायुधधरं युद्धसज्जमिवाम्बरम् ॥ ३५ ॥ शैलानां च वनानां च द्रुमाणां
च वराननम् ॥ प्रतिच्छन्नानि भासन्ते शिखराणि घनैर्घनैः ॥ ३६ ॥ गजानीकैरिवाकीर्णं सलिलोद्गारिभिर्घनैः ॥ वर्णसारूप्यतां याति गगनं सागर-
स्य च ॥ ३७ ॥ समुद्रोद्धूतजनिता लोलाश्शाड्वलकम्पिनः ॥ शीतास्सपृषतोद्दामाः कर्कशा वान्ति मारुताः ॥ ३८ ॥ निशासु सुप्तच-
न्द्रासु मुक्ततोयासु तोयदैः ॥ मग्नसूर्यस्य नभसो न विभान्ति दिशो दश ॥ ३९ ॥ चेतनं पुष्करं कोशैः क्षुधाध्मातैः समन्ततः ॥ न घृणीनां न र-
म्याणां विवेकं यान्ति कृष्टयः ॥ ४० ॥ घर्मदोषपरित्यक्तं मेघतोयविभूषितम् ॥ पश्य वृन्दावनं कृष्ण वनं चैत्ररथं यथा ॥ ४१ ॥ एवं प्रावृड्गुणान्स-
र्वान् श्रीमान्कृष्णस्य पूर्वजः ॥ कथयन्नेव बलवान्व्रजमेव जगाम ह ॥ ४२ ॥ अन्योन्यं रममाणौ तु कृष्णसंकर्षणावुभौ ॥ तत्कालज्ञातिभिस्सार्द्धं
चेरतुस्तद्वनं महत् ॥ ४३ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि प्रावृड्वर्णनं नाम दशमोऽध्यायः ॥ १० ॥ वैशम्पायन उवाच ॥ कदा-
चित्तु तदा कृष्णो विना संकर्षणेन वै ॥ चचार तद्वनं रम्यं कामरूपी वराननः ॥ १ ॥

त्यर्थः । एवमपि कृष्टयः प्रजाः रम्याणां रात्रीणाम् घृणीनां दिवसानां च विवेकम् अन्योन्यतः पृथक्त्वं न यान्तीति न अपितु यान्त्येवेति योजना । मेघोत्थान्धकारावृतानि दिनानि रात्रिकल्पान्यभूवन्नित्यर्थः ॥ ४० ॥ ४१ ॥ ४२॥ तत्कालज्ञातिभिः नतु यादववज्जन्मज्ञातिभिः ॥ ४३ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां दशमोऽध्यायः॥ १०॥ अस्मिन्नेकादशेऽध्याये वनक्रीडा निरूप्यते ॥ कालियक्ष्वेडदग्धीययमुनादर्शनं हरेः ॥ १ ॥ कदाचिदिति ॥ १ ॥

श्रीवत्सेन उरसा धृतेनेति शेषः । तृतीयान्तानां पञ्चमस्थेन रराजेत्यनेनान्वयः ॥ २ ॥ हस्तेन पङ्कजोद्भिन्नं विकसत्कमलं तत्तुल्यतेजसा क्रान्तं विक्रान्तं गमनं यस्य तादृशेन गामिना गमनस्वभावेन पादेन ॥ ३ ॥ ४ ॥ दिवौकसः देवैः ॥ ५ ॥ बाल्ये पौगण्डं दशमावधीत्युक्तेः पौगण्डे ॥ ६ ॥ ७ ॥ नीपाः कदम्बपुष्पाणि कन्दला नवांकुराः तैः शोभमाना नीपकन्दलमालिनी॥ ८ ॥ नभस्यो भाद्रपदः ॥ ९ ॥ अमलं दिव्यं पत्रं दलं यस्य तेन बर्हिपत्रेण मयूरपिच्छेन शुशुभे इत्यनुषङ्गः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

काकपक्षधरः श्रीमान् श्यामः पद्मदलेक्षणः ॥ श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ॥ २ ॥ साङ्गदेनाग्रहस्तेन पङ्कजोद्भिन्नवर्चसा ॥ सुकुमाराभिताम्रेण क्रान्तविक्रान्तगामिना ॥ ३ ॥ पीते प्रीतिकरे नृणां पद्मकिञ्जल्कसप्रभे ॥ सूक्ष्मे वसानो वसने ससंध्य इव तोयदः ॥ ४ ॥ वत्सव्यापारयुक्ताभ्यां व्यग्राभ्यां दण्डरज्जुभिः ॥ भुजाभ्यां साधुवृत्ताभ्यां पूजिताभ्यां दिवौकसैः ॥ ५ ॥ ददृशं पुण्डरीकस्य गन्धेन कमलस्य च ॥ रराज चास्य तद्बाल्ये रुचिरौष्ठपुटं मुखम् ॥ ६ ॥ शिखाभिस्तस्य मुक्ताभी रराज मुखपङ्कजम् ॥ वृतं षट्पदपङ्क्तीभिर्यथा स्यात्पद्ममण्डलम् ॥ ७ ॥ तस्यार्जुनकदम्बाढ्या नीपकन्दलमालिनी ॥ रराज माला शिरसि नक्षत्राणां यथा दिवि ॥ ८ ॥ स तया मालया वीरः शुशुभे कण्ठसक्तया ॥ मेघमालाम्बुदश्यामो नभस्य इव मूर्त्तिमान् ॥ ९ ॥ एकेनामलपत्रेण कण्ठसूत्रावलम्बिना ॥ रराज बर्हिपत्रेण मन्दमारुतकम्पिना ॥ १० ॥ क्वचिद्गायन्क्वचित्क्रीडंश्चञ्चूर्यंश्च क्वचित्क्वचित् ॥ पर्णवाद्यं श्रुतिसुखं वादयंश्च क्वचिद्वने ॥ ११ ॥ गोपवेणुं सुमधुरं कामजातमपि वादयन् ॥ प्रह्लादनार्थं च गवां क्वचिद्वनगतो युवा ॥ १२ ॥ गोकुलेम्बुधरश्यामश्चचार द्युतिमान्प्रभुः ॥ रेमे च तत्र रम्येषु चित्रासु वनराजिषु ॥ १३ ॥ मयूररवघुष्टासु मदनोद्दीपनीषु च ॥ मेघनादप्रतिव्यूहैर्नादितासु समन्ततः ॥ १४ ॥ शाद्वलच्छन्नमार्गासु शिलीन्ध्राभरणासु च ॥ कन्दलामलपद्मासु स्रवन्तीषु नवं जलम् ॥ १५ ॥ केसराणां नवैर्गन्धैर्मदनिःश्वसितोपमैः ॥ अभीक्ष्णं निःश्वसन्तीषु कामिनीष्विव नित्यशः ॥ १६ ॥ सेव्यमानो नवैर्वातैर्द्रुमसंघातनिःसृतैः ॥ तासु कृष्णो मुदं लेभे सौम्यासु वनराजिषु ॥ १७ ॥ स कदाचिद्वने तस्मिन्गोभिः सह परिव्रजन् ॥ ददर्श विपुलोदग्रं शाखिनं शाखिनां वरम् ॥ १८ ॥ स्थितं धरण्यां मेघाभं निबिडं दलसंचयैः ॥ गगनार्धोच्छ्रिताकारं पर्वताभोगधारिणम् ॥ १९ ॥ नीलचित्राङ्गवर्णैश्च सेवितं बहुभिः खगैः ॥ फलैः प्रवालैश्च घनैः स्सेन्द्रचापघनोपमम् ॥ २० ॥

प्रतिव्यूहैः प्रतिध्वनिभिः ॥ १४ ॥ कन्दलानि नवाङ्कुरितानि अमलानि च पद्मानि यासु । कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे इति विश्वः ॥ १५ ॥ कामिनीष्विवेति स्रवन्तीनामुपमा ॥ १६ ॥ १७ ॥ शाखिनं वृक्षम् ॥ १८ ॥ १९ ॥ चित्राङ्गवर्णैः ॥ २० ॥

॥ २१ ॥ निरावर्षं वर्षवारणम् । अनातपम् आतपनिवारणम् ॥ २२ ॥ २३ ॥ २४ ॥ क्रीडनकैः क्रीडासाधनैः ॥ २५ ॥ २६॥२७॥२८॥ तरङ्गा एवापाङ्गाः कटाक्षास्तैः कुटिलं तीरम् ॥ २९ ॥ ३० ॥ मिथुनेचरैश्चक्रवाकादिभिः ॥ ३१ ॥ जलजैर्मीनाद्यैः जलजैर्गुणैः शीतलत्वनिर्मलत्वाद्यैः जलजैः पद्मैः जलजैः शैवालैः ॥ ३२ ॥ स्त्रीरूपेण वर्णयति । प्रसृतेति । स्रोतःशब्दे सकारलोप आर्षः ॥ ३३ ॥ तटच्छेदः प्रवाहस्य मध्ये कार्श्यम् । तिस्रः तरङ्गा एव वलयः तासां धरां तरङ्गत्रिवलीधराम् ॥ ३४ ॥ ३५ ॥

भवनाकारविटपं लतापुष्पसुमण्डितम् ॥ विशालमूलावनतं पवनाम्भोदधारिणम् ॥२१॥ आधिपत्यमिवान्येषां तस्य देशस्य शाखिनाम् ॥ कुर्वाणं शुभकर्माणं निरावर्षमनातपम् ॥२२॥ न्यग्रोधं पर्वताग्राभं भाण्डीरं नाम नामतः ॥ दृष्ट्वा तत्र मतिं चक्रे निवासाय ततः प्रभुः ॥२३॥ स तत्र वयसा तुल्यैर्वत्सपालैस्सहानघ ॥ रेमे वै वासरं कृष्णः पुरा स्वर्गगतो यथा ॥ २४ ॥ तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनम् ॥ रमयन्ति स्म बहवो वन्यैः क्रीडनकैस्तदा ॥ २५ ॥ अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ॥ गोपालाः कृष्णमेवान्ये गायन्ति स्म रतिप्रियाः ॥२६॥ तेषां स गायतामेव वादयामास वीर्यवान् ॥ पर्णवाद्यान्तरे वेणुं तुम्बीवीणां च तत्र ह ॥ २७॥ कदाचिच्चारयन्नेव गास्स गोवृषभेक्षणः ॥ जगाम यमुनातीरं लतालङ्कृतपादपम् ॥२८॥ तरङ्गापाङ्गकुटिलां वारिस्पर्शसुखानिलाम् ॥ तां च पद्मोत्पलवतीं ददर्श यमुनां नदीम् ॥ २९॥ सुतीर्थां स्वादुसलिलां ह्रदिनीं वेगगामिनीम् ॥ तोयवातोद्यतैर्वेगैरवनामितपादपाम् ॥३०॥ हंसकारण्डवोद्घुष्टां सारसैश्च निनादिताम् ॥ अन्यैर्मिथुनैश्चैव सेवितां मिथुनेचरैः ॥ ३१ ॥ जलजैः प्राणिभिः कीर्णां जलजैर्भूषितां गुणैः ॥ जलजैः कुसुमैश्चित्रां जलजैर्हरितोदकाम् ॥ ३२ ॥ प्रसृतस्रोतचरणां पुलिनश्रोणिमण्डलाम् ॥ आवर्त्तनाभिगम्भीरां पद्मरोमानुरञ्जिताम् ॥ ३३ ॥ तटच्छेदोदरां कान्तां त्रितरङ्गवलीधराम् ॥ फेनप्रहृष्टवदनां प्रसन्नां हंसहासिनीम् ॥ ३४ ॥ रुचिरोत्पलरक्तोष्ठीं नतभ्रूं जलजेक्षणाम् ॥ ह्रदर्दीर्घललाटान्तां कान्तां शैवलमूर्द्धजाम् ॥ ३५ ॥ चक्रवाकस्तनतटीं तीरपार्श्वायताननाम् ॥ दीर्घस्रोतायतभुजामाभोगश्रवणायताम् ॥३६ ॥ कारण्डवाकुण्डलिनीं श्रीमत्पङ्कजलोचनाम् ॥ तटजाभरणोपेतां मीननिर्मलमेखलाम् ॥३७॥ वारिप्लवप्लवक्षौमां सारसारावनूपुराम् ॥ काशचामीकरं वासो वसानां हंसलक्षणाम् ॥ ३८ ॥

आभोगश्रवणायताम् आभोगस्तटस्योभयतः पूर्णता सैव श्रवणे आयते यस्यास्ताम् ॥ ३६ ॥३७॥ वारिणि प्लवन्ते विस्तारं यान्ति शैवालाः कमलिनीदलानि वा तेषां यः प्लवः विपुलता सैव क्षौमम् अतसीसूत्रमयं वासो यस्यास्ताम् ॥ ३८ ॥

पाठा०–१ अन्योन्यमिथुनैश्चैवेति ।

निपानं पशूनां पानस्थलं तत्र ये श्वापदास्त एवापीडो भूषा यस्यास्ताम् ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ विषारणयः सर्पाः ॥ ४४ ॥ ४५ ॥ आकाशादपि आकाशमार्गेपि ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ निर्विषयाकारम् आकाशवन्निरालम्बनम् ॥ ५४ ॥ कर्तव्यौ नतु स्वतःसिद्धौ मार्गौ ययोस्तौ ॥

भीमनक्रानुलिप्ताङ्गीं कूर्मलक्षणभूषिताम् ॥ निपानश्वापदापीडां नृभिः पीनपयोधराम् ॥३९॥ श्वापदोच्छिष्टसलिलामाश्रमस्थानसंकुलाम् ॥ तां समुद्रस्य महिषीमीक्षमाणस्समन्ततः॥४०॥ चचार रुचिरं कृष्णो यमुनामुपशोभयन् ॥ तां चरन्स नदीं श्रेष्ठां ददर्श ह्रदमुत्तमम् ॥४१॥ दीर्घं योजनविस्तारं दुस्तरं त्रिदशैरपि ॥ गम्भीरमक्षोभ्यजलं निष्कम्पमिव सागरम् ॥४२॥ तोयजैःश्वापदैस्त्यक्तं शून्यं तोयचरैः खगैः ॥ अगाधेनाम्भसा पूर्णमेघपूर्णमिवाम्बरम् ॥ ४३ ॥ दुःखोपसर्प्यं तीरेषु ससर्पैर्विपुलैर्बिलैः ॥ विषारणिभवस्याग्रेर्धूमेन परिवेष्टितम् ॥ ४४ ॥ अभोग्यं तत्पशूनां हि अपेयं च जलार्थिनाम् ॥ उपभोगैः परित्यक्तं सुरैस्त्रिषवणार्थिभिः ॥ ४५ ॥ आकाशादप्यसंचार्यं खगैराकाशगोचरैः ॥ तृणेष्वपि पतत्स्वप्सु ज्वलन्तमिव तेजसा ॥ ४६॥ समन्ताद्योजनं साग्रं देवैरपि दुरासदम् ॥ विषानलेन घोरेण ज्वालाप्रज्वलितद्रुमम्॥४७॥व्रजस्योत्तरतस्तस्य क्रोशमात्रे निरामये॥ तं दृष्ट्वा चिन्तयामास कृष्णो वै विपुलं ह्रदम् ॥ ४८ ॥ अगाधं द्योतमानं च कस्यायं महतो ह्रदः ॥ अस्मिन्स कालियो नाम कालाञ्जनचयोपमः ॥ ॥ ४९ ॥ उरगाधिपतिस्साक्षाद्ध्रदे वसति दारुणः ॥ उत्सृज्य सागरावासं यो मया विदितः पुरा ॥ ५० ॥ भयात्पतगराजस्य सुपर्णस्योरगाशिनः॥ तेनेयं दूषिता सर्वा यमुना सागरंगमा ॥ ५१ ॥ भयात्तस्योरगपतेर्नायं देशो निषेव्यते ॥ तदिदं दारुणाकारमरण्यं रूढशाड्वलम् ॥ ५२ ॥ सावरोहद्रुमं घोरं कीर्णं नानालताद्रुमैः ॥ रक्षितं सर्पराजस्य सचिवैरातकारिभिः ॥ ५३ ॥ वनं निर्विषयाकारं विषान्नमिव दुस्स्पृशम् ॥ तैरातकारिभिर्नित्यं सर्वतः परिरक्षितम् ॥ ५४ ॥ शैवालनलिनैश्चापि वृक्षैः क्षुद्रलताकुलैः ॥ कर्तव्यमार्गौ भ्राजेते ह्रदस्यास्य तटावुभौ ॥ ५५ ॥ तदस्य सर्पराजस्य कर्तव्यो निग्रहो मया ॥ यथेयं सरिदम्भोदा भवेच्छिवजलाशया ॥ ५६ ॥ व्रजोपभोग्या च यथा नागे च दमिते मया॥ सर्वत्र सुखसंचारा सर्वतीर्थसुखाश्रया ॥ ५७ ॥ एतदर्थं च वासोयं व्रजेस्मिन्गोपजन्म च ॥ अमीषामुत्पथस्थानां निग्रहार्थं दुरात्मनाम् ॥ ५८ ॥ एनं कदम्बमारुह्य तदेव शिशुलीलया ॥ विनिपत्य ह्रदे घोरे दमयिष्यामि कालियम् ॥ ५९ ॥

॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

पाठा०–१षड्भिस्त्रिषवणार्थिभिरिति ।

॥ ६० ॥ इति श्रीमत्पद० नीलकण्ठकृतौ भारतभावप्रदीपे हरिवंशार्थप्रकाशे विष्णुपर्वणि टीकायामेकादशोऽध्यायः ॥ ११ ॥ अमुष्मिन्द्वादशेऽध्याये कालियस्य फणोपरि ॥ नृत्यं चक्रे हरिश्चेति यमुना निर्विषोच्यते ॥ १ ॥ सोपसृत्येत्यध्याहृत्य योऽहन्नहिर्मन्वपस्ततर्दैत्यपादहस्तो अपृतन्यदिन्द्रमिति चोपदिष्टं कालियदमनम् उपबृंहयति । तत्र मन्त्रावयवयोरर्थस्तु योऽहिः सर्पोपः यमुनाजलानि ततर्द विषसंपर्केण नाशितवान् तमिन्द्रो अहन् हिंसितवान् । पीडनमात्रमत्र हन्त्यर्थः । सच अहिः अपात् पादहीनः अहस्तः श्वसन्

(एवं कृते बाहुवीर्यं लोके ख्यातिं गमिष्यति) ॥६०॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि बालचरिते यमुनावर्णनं नामैकादशोऽध्यायः॥ ॥ ११ ॥ वैशम्पायन उवाच ॥ सोपसृत्य नदीतीरं बद्ध्वा परिकरं दृढम् ॥ आरोहच्चपलः कृष्णः कदम्बशिखरं मुदा ॥ १ ॥ कृष्णः कदम्बशिखरालम्बमानो घनाकृतिः ॥ ह्रदमध्येऽकरोच्छब्दं निपतन्नम्बुजेक्षणः ॥२॥ कृष्णेन तत्र पतता क्षुभितो यमुनाह्रदः ॥ संप्रासिच्यत वेगेन भिद्यमान इवाम्बुदः ॥ ३ ॥ तेन शब्देन संक्षुब्धं सर्पस्य भवनं महत् ॥ उदतिष्ठज्जलात्सर्पो रोषपर्याकुलेक्षणः ॥४॥ स चोरगपतिः क्रुद्धो मेघराशिसमप्रभः ॥ ततो रक्तान्तनयनः कालियस्समदृश्यत ॥ ५॥ पञ्चास्यः पावकोच्छ्वासश्चलजिह्वोनलाननः ॥ पृथुभिः पञ्चभि र्घोरैः शिरोभिः परिवारितः ॥ ६ ॥ पूरयित्वा ह्रदं सर्वं भोगेनानलवर्चसा ॥ स्फुरन्निव च रोषेण ज्वलन्निव च तेजसा ॥ ७ ॥ क्रोधेन ज्वलतस्तस्य जलं शृतमिवाभवत् ॥ प्रतिस्रोताश्च भीतेव जगाम यमुना नदी ॥ ८ ॥ तस्य क्रोधाग्निपूर्णेभ्यो वक्त्रेभ्योभूच्च मारुतः ॥ दृष्ट्वा कृष्णं ह्रदगतं क्रीडन्तं शिशुलीलया ॥ ९ ॥ सधूमाः पन्नगेन्द्रस्य मुखान्निश्चेरुरर्चिषः ॥ सृजता तेन रोषाग्निं समीपे तीरजा द्रुमाः ॥ १० ॥ क्षणेन भस्मसान्नीता युगान्तप्रतिमेन वै ॥ तस्य पुत्राश्च दाराश्च भृत्याश्चान्ये महोरगाः ॥ ११ ॥ वमन्तः पावकं घोरं वक्त्रेभ्यो विषसंभवम् ॥ सधूमं पन्नगेन्द्रास्ते निपेतुरमितौजसः ॥ १२ ॥ प्रवेशितश्च तैस्सर्पैस्स कृष्णो भोगबन्धनम् ॥ निर्यत्नचरणाकारस्तस्थौ गिरिरिवाचलः ॥१३॥ अदशन्दशनैस्तीक्ष्णैर्विषोत्पीडजलाविलैः ॥ ते कृष्णं सर्पपतयो न ममार च वीर्यवान् ॥ १४ ॥ एतस्मिन्नन्तरे भीता गोपालास्सर्व एव ते ॥ क्रन्दमाना व्रजं जग्मुर्बाष्पगद्गदया गिरा ॥ १५ ॥ ॥ गोपा ऊचुः ॥ ॥ एष मोहं गतः कृष्णो मग्नो वै कालिये ह्रदे ॥ भक्ष्यते सर्पराजेन तदागच्छत माचिरम् ॥ १६ ॥

इन्द्रम् अपृतन्यत अयोधयदिति एतेनास्य सर्परूपत्वमुक्तमतोऽहिर्वृत्राख्यो यत्राप्संबन्धस्तत्रायमेव बोद्धव्यः ॥ १ ॥ लम्बमानः अधः पतन् ॥२॥३॥४॥५॥ पञ्चास्यः पञ्चवदनः ॥६॥ भोगेन देहेन ॥ ७ ॥ शृतं क्वथितं प्रतिस्रोताः विपरीतप्रवाहाः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तेऽदशन्निति पूर्वेण संबन्धः ॥ १४ ॥ १५ ॥ १६ ॥

१ इदमर्धमधिकमिति भाति । पाठा०- २ युवेति ।

॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ सर्पभोगेन सर्पभोगबन्धेन स्पन्दितं किञ्चिच्चालितं धैर्यादिति शेषः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

नन्दगोपाय वै क्षिप्रं सबलाय निवेद्यताम् ॥ एष ते कृष्यते कृष्णः सर्पेणेति महाह्रदे ॥ १७ ॥ नन्दगोपस्तु तच्छ्रुत्वा वज्रपातोपमं वचः ॥ आर्त्तः
स्खलितविक्रान्तस्तं जगाम ह्रदोत्तमम् ॥१८॥ सबालयुवतीवृद्धस्स च संकर्षणो युवा ॥ आक्रीडं पन्नगेन्द्रस्य जलस्थं समुपागमत् ॥ १९॥ नन्द-
गोपमुखा गोपास्ते सर्वे साश्रुलोचनाः ॥ हाहाकारं प्रकुर्वन्तस्तस्थुस्तीरे ह्रदस्य वै ॥२०॥ व्रीडिता विस्मिताश्चैव शोकार्ताश्च पुनः पुनः ॥ केचित्तु
पुत्र हाहेति हा धिगित्यपरे पुनः ॥२१॥ अपरे हा हतास्स्मेति रुरुदुर्भृशदुःखिताः ॥ स्त्रियश्चैव यशोदां तां हा हतासीति चुक्रुशुः ॥२२॥ या पश्य-
सि प्रियं पुत्रं सर्पराजवशंगतम् ॥ स्पन्दितं सर्पभोगेन कृष्यमाणं यथा मृतम् ॥ २३ ॥ अश्मसारमयं नूनं हृदयं ते विलक्ष्यते ॥ पुत्रं कथमिमं दृष्ट्वा
यशोदे नावदीर्यसे ॥२४॥ दुःखितं बत पश्यामो नन्दगोपं ह्रदान्तिके ॥ न्यस्य पुत्रमुखे दृष्टिं निश्चेतनमवस्थितम् ॥२५॥ यशोदामनुगच्छन्त्यस्स-
र्वासमिमं ह्रदम् ॥ प्रविशामो न यास्यामो विना दामोदरं व्रजम् ॥ २६ ॥ दिवसः को विना सूर्यं विना चन्द्रेण का निशा ॥ विना वृषेण का गावो
विना कृष्णेन को व्रजः ॥ २७ ॥ विना कृष्णं न यास्यामो विवत्सा इव धेनवः ॥ तासां विलपितं श्रुत्वा तेषां च व्रजवासिनाम् ॥ विलापं नन्दगोप-
स्य यशोदारुदितं तथा ॥ २८ ॥ एकभावशरीरज्ञ एकदेहो द्विधा कृतः ॥ संकर्षणस्तु संक्रुद्धो बभाषे कृष्णमव्ययम् ॥२९॥ कृष्ण कृष्ण महाबाहो
गोपानां नन्दवर्द्धन ॥ दम्यतामेष वै क्षिप्रं सर्पराजो विषायुधः ॥ ३० ॥ इमे नो बान्धवास्तात त्वां मत्वा मानुषं विभो ॥ परिदेवन्ति करुणं सर्वे
मानुषबुद्धयः ॥ ३१॥ तच्छ्रुत्वा रौहिणेयस्य वाक्यं संज्ञासमीरितम् ॥ विक्रम्यास्फोटयद्बाहू भित्त्वा तन्नागबन्धनम्॥ ३२ ॥ तस्य पद्भ्यामथाक्र-
म्य भोगराशिं जलोत्थितम् ॥ शिरस्तु कृष्णो जग्राह स्वहस्तेनावनाम्य च ॥३३॥ तस्यारुरोह सहसा मध्यमं तन्महच्छिरः ॥ सोऽस्य मूर्ध्नि स्थितः
कृष्णो ननर्त्त रुचिराङ्गदः ॥३४॥ मृद्यमानस्स कृष्णेन शान्तमूर्द्धा भुजङ्गमः ॥ आस्यैस्सरुधिरोद्गारैः कातरो वाक्यमब्रवीत् ॥ ३५ ॥ अविज्ञाना-
न्मया कृष्ण रोषोयं संप्रदर्शितः ॥ दमितोहं हतविषो वशगस्ते वरानन ॥३६॥ तदाज्ञापय किं कुर्यां सदा सापत्यबान्धवः ॥ कस्य वा वशतां यामि
जीवितं मे प्रदीयताम् ॥ ३७ ॥ पञ्चमूर्द्धानतं दृष्ट्वा सर्पं सर्पारिकेतनः ॥ अक्रुद्ध एव भगवान्प्रत्युवाचोरगेश्वरम् ॥ ३८ ॥

॥ २९ ॥ ३० ॥ परिदेवन्ति शोचन्ति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

पाठा०-१ त्वरितविक्रान्त इति ।

प्रह्लादयित्वा चन्दनस्तुत्या प्रेष्यां स्तुत्वापि विक्षिपन्तीं निन्दन्तीं तेन भ्रान्तत्वमस्याः व्यक्तम् ॥ १० ॥ ११ ॥ अवगुण्ठ्य वस्त्रेणावृत्य उपधाने उच्छीर्षके अन्तरमवकाशम् ॥ १२ ॥ संज्ञाय संकेत्य तां सोन्वगमत् ॥ १३ ॥ ग्रहाय गृहीत्वा ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ गन्धाश्रयमदृष्ट्वा मेदिन्येव गन्धं मुञ्चतीति तर्कयति । कथमिति । एकतरोतिशयिततरः ॥ १९ ॥ विवेक्षन्ती व्यवेक्षमाणा । भागुरिमतेनाकारलोपः अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् ॥२०॥ युज्यतीति । उवाच

सरसं चन्दनं गृह्य प्रेष्याहस्तादनिन्दिताम् ॥प्रह्लादयित्वा हृदयं क्षिपन्तीं निर्दयं पुनः॥१०॥पुनरुत्थाय शयनात्पतन्तीं च पुनः पुनः॥ तास्ताश्चेष्टाः प्रियायाश्च तथान्या ददृशे हरिः ॥११॥ अवगुण्ठ्य यदा वक्त्रमुपधाने न्यवेशयत् ॥ इदमन्तरमित्येवं तदा गत्वा जनार्दनः ॥१२॥ प्रेष्याजनं स संज्ञाय अनाख्येयोस्मि संज्ञया ॥ सशङ्कितप्रचारश्च वारितोन्वगमत्स ताम् ॥ १३ ॥ ग्रहाय व्यजनं चैव स्थित्वा स परिपार्श्वतः ॥ शनैरिवासृजद्वातं जहास शनकैरिव ॥ १४ ॥ स पारिजातपुष्पस्य संसर्गादनुवासितः ॥ बभार भगवान्गन्धं दिव्यं मानुषदुर्लभम् ॥ १५ ॥ अत्यद्भुतं सुगन्धं च जिघ्रित्वा विस्मयान्विता॥ अपावृणोन्मुखं सत्या किमेतदिति चाब्रवीत् ॥१६॥ सोत्थिता पृष्ठतो देवमपश्यन्ती शुचिस्मिता ॥ पर्यपृच्छदथो प्रेष्या गन्धस्य प्रभवे तदा ॥१७॥ ताः पृष्टास्त्वप्रभापन्त्यो जानुभ्यां धरणीं गताः ॥ अवाङ्मुख्यस्ततस्तस्थुः कृताञ्जलिपुटास्तदा ॥१८॥ तदपूर्वमदृष्ट्वेव गन्धं मुञ्चति मेदिनी ॥कथमेकतरस्तस्या गन्धोयमिति तत्खलु ॥१९॥ किं त्विदं स्यादिति च सा विवक्षन्ती समन्ततः ॥ ददृशे केशवं देवी सहसा लोकभावनम् ॥२०॥ युज्यतीति ततोवाच सहसास्त्राविलक्षणा ॥ अर्धातिक्रैव रोषेण बभूव प्रणयान्विता ॥२१॥ सा प्रस्फुरितताम्रोष्ठी निःश्वस्याधोमुखी तदा ॥ मुहूर्तमासितापाङ्गी तस्थावन्यमुखी शुभा ॥ २२ ॥ नि[illegible]य भ्रुकुटिं वामां सव्यां[illegible]क्षिप्य लोचने ॥ निवेश्य वदनं हस्ते शोभसीत्यब्रवीद्धरिम् ॥ २३ ॥ तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजम् ॥ कुशेशयपलाशाभ्यामवश्यायजलं यथा ॥ २४ ॥ समुत्पत्य जलं तत्र पतितं वदनाम्बुजात् ॥ प्रतिजग्राह पद्माक्षः कराभ्यामतिसत्वरः ॥२५॥अथोरसि पतत्तोयं श्रीवत्साङ्कोम्बुजेक्षणः ॥ प्रियानयनजं देवः परिमृज्येदमब्रवीत् ॥ २६ ॥स्रवत्यासितपत्राक्षि किमर्थं तव भामिनि ॥ तोयं सुन्दरि नेत्राभ्यां पुष्करस्थामिवोदकम् ॥ २७ ॥ प्रभाते पूर्णचन्द्रस्य मध्याह्ने पङ्कजस्य च ॥ विभर्ति तव किं वक्त्रं वपुस्तव मनोहरे ॥ २८ ॥

सद्योस्त्राविलेक्षणाभूत् ननु अन्यत् वक्तुमशकत् ॥ २१ ॥ अन्यमुखी कृष्णपराङ्मुखी ॥ २२ ॥ शो[illegible]सुखम्मार्थं ननु रञ्जनार्थम ॥ २३ ॥ २४ ॥ २५ ॥ उरसि परिमृज्येति स्नेहातिशयसूचनम ॥ २६ ॥ २७ ॥ वपुः स्वरूपम् ॥ २८ ॥

कुङ्कुमेन रक्तं कौङ्कुमं पीतारुणमित्यर्थः । महारजतेन रक्तद्रव्यविशेषेण रक्तम् माहारजतं रक्तकौसुम्भमित्यर्थः ॥ २९ ॥ देवेति । देवपूजायामेव शुक्लमिष्टं नान्यदित्यर्थः ॥ ३० ॥
चित्रकस्थानं पत्रलेखास्थानम् आक्रान्तमश्लिष्टमित्यर्थः । अवरं श्रेष्ठं वर्णः देहकान्तिर्यस्यास्तत्संबुद्धिः हे अवरवर्णिनि ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ रत्नैश्च रत्नजातैराभरणैश्च-

किमर्थं कौङ्कुमं वासो महारजतमेव च ॥ नानुगृह्णासि सुश्रोणि शुक्लं वासोनुगृह्यते ॥२९॥ वाससी एते तवाभीष्टे महारजतकौङ्कुमे ॥ देवाभिगमनादूर्ध्वं शुक्लं नेष्टं हि तत्स्त्रियाः ॥ ३० ॥ किंचानाभरणं गात्रं सुगात्रि तव कथ्यताम् ॥ चित्रकस्थानमाक्रान्तं कस्मादवरवर्णिनि ॥ ३१ ॥ श्वेतेन तव पादेन वाससा प्रियदर्शने ॥ ललाटं सेव्यते कस्माच्चन्दनेन सुगन्धिना ॥ ३२ ॥ सरसेनायतापाङ्गि कान्तेन हृदयप्रिये ॥ प्रभोपमर्दं केनापि कारणेनाननस्य च ॥ करोषि मम वात्यर्थं मनो ग्लापयसि प्रिये ॥ ३३ ॥ प्रसृतश्चन्दनरसः कपोलप्रणयी तव ॥ पत्रलेखासपत्नत्वं प्राप्तो नातिविराजते ॥ ३४ ॥ रत्नैश्चाभरणैर्मुक्ता तव ग्रीवा न शोभते ॥ ग्रहनक्षत्ररहिता द्यौरिवाव्यक्तशारदी ॥ ३५ ॥ पूर्णचन्द्रसपत्नेन स्मेरेणावहुभाषिणा ॥ किमु नो भाषसे माद्य मुखेनोत्पलगन्धिना ॥ ३६ ॥ अर्द्धाक्ष्णापि हि तावन्मां किमर्थं न निरीक्षसे ॥ मुञ्चस्येव सनिश्वासं तोयमञ्जनदुर्दिनम् ॥३७॥ अलमिन्दीवरश्यामे रुदितेन मनस्विनि ॥ जलमञ्जनकल्माषं मा मोक्षीराननद्विपम् ॥ ३८ ॥ त्वदीयोहं यदा देवि ख्यातो जगति किंकरः ॥ न ज्ञापयसि किं मां त्वं पुरेव वरवर्णिनि ॥ ३९ ॥ किमकार्षमहं देवि विप्रियं तव भामिनि ॥ येनातिमात्रमात्मानमायासयसि सुंदरि ॥ ४० ॥ मनसा कर्मणा वाचा न त्वामतिचराम्यहम् ॥ सर्वथा सर्वचार्वङ्गि सत्यमेतद्ब्रवीम्यहम् ॥ ४१ ॥ बहुमानोपमान्यासु स्त्रीषु सर्वासु शोभने ॥ स्नेहश्च बहुमानश्च त्वामृतेऽन्यासु नास्ति मे ॥ ४२ ॥ नैव त्वां मदनो जह्यान्मृतेपि मयि मामकः ॥ इति मे निश्चितं विद्धि चेतः सुरसुतोपमे ॥ ४३ ॥ क्षमादयश्च मेदिन्यां शब्दाद्याश्चाम्बरे गुणाः ॥ ध्रुवं पङ्कजगर्भाभे त्वयि स्नेहस्तथा मम॥ ४४ ॥ रुचिरग्नौ यथा दिव्या प्रभा चैव दिवाकरे ॥ कान्तिश्च शाश्वती चन्द्रे स्नेहस्त्वयि तथा मम ॥ ४५ ॥ एवंवादिनमात्मेष्टं सत्यभामा जनार्दनम् ॥ शनैरुवाच नेत्राभ्यां प्रमृज्य सुभगा जलम् ॥ ४६ ॥ मदीयस्त्वमिति ह्यासीन्मम नित्यं मनः प्रभो ॥ अद्य साधारणं स्नेहं त्वयि तावद्गतास्म्यहम् ॥ ४७ ॥ नाज्ञासिषमहं पूर्वमनित्यं कालपर्ययम् ॥ अद्य लोकगतिं कृत्स्नामवगच्छामि न ध्रुवम् ॥ ४८॥

षिः ॥ ३५ ॥ स्मेरेण उत्फुल्लेन । माद्य मामव ॥ ३६ ॥ तोयमश्रु अञ्जनेन दुर्दिनं मलिनम् ॥ ३७ ॥ द्विपमित्यदन्तत्वं कप्रत्ययान्तत्वात् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥
॥ ४२ ॥ मदनो नैव जह्यादित्यरतियौवनं वा तव मास्त्वित्यर्थः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

अमृतायाः जीवन्त्याः मम द्वितीयस्त्वमिति । अपिशब्दात्त्वाप्यहमेव द्वितीयेति मया स्वजन्म औहि अतर्कि । यथाहं त्वदन्यं न जाने एवं त्वमपि मदन्यां न जाना-
सीत्येवमहं नित्यं तर्कितवतीत्यर्थः । जन्मौहि पुंस्त्वमार्षमिति प्राञ्चः ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ग्रहाय आदाय हरिवाससः पटान्तम्
अञ्चलम् ॥ ५५ ॥ इति श्रीनीलकण्ठीये भारतभावदीपे खिलेषु हरिवंशे विष्णुपर्वणि टीकायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ६७ ॥ सप्तषष्टितमेऽध्याये पारिजातद्रुणा

अमृताया द्वितीयोपि जन्मौहि मम सर्वथा ॥ किमत्र बहुनोक्तेन हृदयं वेद्मि तेऽच्युत ॥ ४९ ॥ वाङ्मात्रेणैव पश्यामि माधुर्यं संप्रयुज्यसे ॥ सखि
स्नेहश्च कृतकस्तवान्यत्र न कृत्रिमः ॥ ५० ॥ ऋजुस्वभावां भक्तां च सर्वथा पुरुषोत्तम ॥ अवजानासि जानन्मां कैतवीं वृत्तिमास्थितः ॥ ५१ ॥
एतावत्खलु पर्याप्तं दृष्टं द्रष्टव्यमव्ययम् ॥ श्रुतं चाप्यथ यच्छ्राव्यं दृष्टः स्नेहफलोदयः ॥ ५२ ॥ यदि त्वहमनुग्राह्या मामनुज्ञातुमर्हसि ॥ तपस्येहं
परं कृत्वा निश्चयं पुरुषोत्तम ॥ ५३ ॥ भर्तुश्छन्देन नारीणां तपो वा व्रतकानि वा ॥ निष्फलं खलु भर्तुरच्छन्देन क्रियते हि ॥ ५४ ॥ इतीदमु-
क्त्वा पुनरेव शोभना मुमोच तोयं नयनोद्भवं सती ॥ ग्रहाय पीतं हरिवाससः शुभा पटान्तमाधाय मुखे शुचिस्मिता ॥ ५५ ॥ इति श्रीमहाभारते
खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे षट्षष्टितमोऽध्यायः॥ ६६ ॥ ॥ ६७ ॥ ॥ वैशम्पायन उवाच ॥ नारायणः सत्यभामां पुनरेवेप भारत ॥
प्रोवाच प्रणयात्क्रुद्धामभिमानवतीं सतीम् ॥ १ ॥ श्रीभगवानुवाच ॥ दहन्तीव ममाङ्गानि शोकः कमललोचने ॥ किमु तत्कारणं येन त्वमेवमति-
विक्लवा ॥ २ ॥ शापितासि मम प्राणैराचक्ष्वानत्ययो यदि ॥ श्रोतव्यं यदि भक्तेन भर्त्रा सर्वाङ्गशोभने ॥ ३ ॥ ततः प्रोवाच भर्तारं सत्या सत्यव्रते
स्थितम् ॥ बाष्पगद्गदया वाचा तथैवाधोमुखी स्थिता ॥ ४ ॥ त्वयैव स्थापितं पूर्वं सौभाग्यं मम मानद ॥ जगत्यमलपत्राक्ष यत्ख्यातं केशिनाशन
॥ ५ ॥ शिरो वहामि चेष्टत्वात्त्वयाहं देव गर्विता ॥ सर्वसीमन्तिनीमध्ये स्पृहणीयास्मि सर्वथा ॥ ६ ॥ साहमद्यावहास्यामि सपत्नीनां जनस्य च ॥
इति प्रेष्याभिराख्यातं श्रुत्वा तथ्यं ततस्ततः ॥ ७ ॥ यत्पारिजातकुसुमं दत्तवान्नारदस्तव ॥ तत्किलेष्टजने दत्तं त्वयाहं परिवर्जिता ॥ ८ ॥ रत्ना-
तिशयदानेन तस्यामभ्यधिकः किल ॥ स्नेहश्च बहुमानश्च प्रकाशं गमितस्त्वया ॥ ९ ॥ तामस्तौषीत्समक्षं ते प्रियां स किल नारदः ॥ तमश्रौषीश्च
हृष्टस्त्वं प्रियायाः संस्तवं किल ॥ १० ॥ स्तोतव्यो यदि तावत्स नारदेन तवाग्रतः ॥ दुर्भगोयं जनस्तत्र किमर्थमनुशब्दितः ॥ ११ ॥

ततः ॥ हरिणा सान्त्विता सत्या सुरेन्द्रमदशित्तये ॥ १ ॥ १ ॥ २ ॥ शापितासि च पथेनाभियुक्तासि । अनत्ययः अविनाशः ॥ ३ ॥ ४ ॥ ५ ॥ शिरः श्रोदिम्
॥ ६ ॥ ७ ॥ इष्टजने इति शेषात् रुक्मिण्या अभिधानम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

॥ १२ ॥ यदहं स्वप्नेन योगमयेन दृष्टापि न श्रद्धध्यां [illegible] प्रेमार्थमिति [illegible] ॥ १३ ॥ पुनः कामां रुक्मिणीमनु [illegible]
मयुक्तमिति भावः ॥ १४ ॥ १५ ॥ १६ ॥ कुमुद्वतीनाम्नां [illegible] गतिं कुमुद्वत्या अनाथायाः गतिः [illegible] ॥
॥ १८ ॥ १९ ॥ परपुष्टस्वनोन्मिश्रं कोकिलस्वनमिश्रम् । [illegible] ॥ २० ॥ २१ ॥ कः स्मरिष्यति मयि मृतायामिति भावः ॥ २२ ॥
॥ २३ ॥ २४ ॥ नाहमिति । हे [illegible] पूर्वं त्वां कितवं धूर्तमित्यादिरूपं [illegible]

प्रणयस्य रसं दत्त्वा पश्चात्तापः प्रभो यदि ॥ [illegible] ॥ १२ ॥ स्वप्नेनापि न दृष्टाहं श्रद्दध्यां [illegible] ॥
यदन्यदेव निर्वृत्तमथोपं पश्यतस्तव ॥ १३ ॥ कामं कामान्तु [illegible] ॥ अद्य [illegible] मे देव सांनिध्यं तव तत्र [illegible] ॥ १४ ॥
मानार्थं जीव्यते लोके सद्भिरित्युक्तवानसि ॥ तदेवं सति नेच्छामि जीवितुं [illegible] ॥ १५ ॥ [illegible] रक्षा भयमद्य ततो मम ॥ [illegible]
रक्षते यो मां स मां नाद्याभिरक्षति ॥ १६ ॥ हा गतिं कां गमिष्यामि [illegible] ॥ १७ ॥ कुमुद्वतीगतां नूनं गतिं यास्याम्यसंगता [illegible]
किमकार्षमहं मोहादीश्वराणां प्रियाप्रियम् ॥ प्रिया भूत्वाप्रिया भूता [illegible] ॥ १८ ॥ वसन्तकुसुमैश्चित्रं सदा रैवतकं गिरिम् ॥ [illegible]
भूत्वाऽप्रिया भूता कथं द्रक्षाम्यहं पुनः ॥ १९ ॥ परपुष्टस्वनोन्मिश्रं पुष्पभारमहं शुचिम् ॥ कथं [illegible] द्वेष्या सेवेयं दुर्भगा सती ॥ २० ॥
जलक्रीडां तवाङ्कस्था देव कृत्वा महोदधौ ॥ कथं दौर्भाग्यमापन्ना [illegible] सागरम् ॥ २१ ॥ सात्राजिति प्रिया नान्या त्वत्तो ऽस्तीति [illegible]
माम् ॥ यद्वोचः क्व तद्यातमथवा कः स्मरिष्यति ॥ २२ ॥ [illegible] मां [illegible] नन्दिनी ॥ अवज्ञातां त्वया राज्ञीं नूनं दौर्भाग्यक-
र्शिताम् ॥ २३ ॥ किं नु गूढेन मे प्रेम्णा सुस्निग्धेनापि मानद ॥ यत्समानां जनो [illegible] मां न पश्यति नित्यदा ॥ २४ ॥ नाहं त्वां कितवं
धूर्तमज्ञासिषमरिंदम ॥ अद्य ज्ञातोसि तत्पक्षचञ्चलो जनवञ्चकः ॥ २५ ॥ स्वरवर्णेङ्गिताकारैर्निगूढो देव यत्नतः ॥ चौर ज्ञातोसि तत्पक्ष-
वाङ्मात्रमधुरः शठः ॥ २६ ॥ एवमीर्ष्यावशं प्राप्तां देवीं सात्राजितीं हरिः ॥ अभिमानवतीं देवः सान्त्वपूर्वमथाब्रवीत् ॥ २७ ॥

ब्रह्मदासा ब्रह्मेमे किं तवा उतेत्याद्यागमादपि नाज्ञासिषम् । अद्य तु हे अजन जन्मादिहीन त्वं तत्पक्षचञ्चल इति ज्ञातोसि तस्याः मत्सपत्न्याः मायायाः पक्षे
एवं चञ्चलो मायाविशिष्टचिद्रूपस्य तव मायांशेनैव चाञ्चल्यं वञ्चकत्वं च ननु चिदंशेनेत्यवैवमित्यर्थः । तत्पक्षेति समासैकदेशोपि वञ्चकशब्देन संबद्ध्यावर्तते ॥ २५ ॥
वाङ्मनसोरगोचरोहं कथं त्वया ज्ञात इत्यत आह । स्वरेति । हे देव त्वं स्वरश्च वर्णश्च इङ्गितं च आकारश्च तैः लिङ्गैः कृत्वा त्वम् अतिगूढो निष्पकटोपि यत्नतः शठो

मध्यस्थ उदासीन इति ज्ञातोसि अयं भावः । वागाद्युद्बोधकतया संघातविशिष्टरूपेण प्रत्यगात्मत्वात् नित्यं ज्ञातोपि साक्षिवदसङ्गत्वेन इदानीमेव ज्ञात इत्यर्थः । अत एव चौरवत्प्रच्छन्नत्वाच्चौरेति संबोधयति । तत्पक्षेति । मायापक्षे त्राह्मलौकिकान्तैश्वर्यविषये रम्या रामाः जरामरणवर्जितः कायः संकल्पमात्रोपनता भोगा इत्यादिवाङ्मात्रेण मधुरः मधुरभाषी वेदकर्तृत्वात् असि । न त्वर्थतस्तत्र माधुर्यमस्तीति भावः । यतः शठ उदासीन अभोक्तृत्वात् शठो मध्यस्थपुरुषे धूर्तधत्तूरयोरपीति विश्वः । कृष्णपक्षे तु दृशो-

मैवं पद्मपलाशाक्षि प्राणेश्वरि वद प्रिये ॥ किमत्र बहुनोक्तेन त्वदीयमवगच्छ माम् ॥२८॥ [illegible] पारिजातकुसुमं तस्या देवि समागतः ॥ नारदो [illegible] कुर्वन्मुनिरक्लिष्टकर्मकृत् ॥२९॥ दाक्षिण्याद्दानुरोधाच्च दत्तवानत्र संशयः ॥ प्रतीदैकापराधं मे [illegible] शुचिस्मिते ॥३०॥ पारिजातकपुष्पाणि [illegible] दीच्छस्यतिकोपने ॥ तदा दातास्मि सुश्रोणि सत्यमेतद्ब्रवीमि ते ॥३१॥ स्वर्गास्पदाद्दानयित्वा पारिजातं द्रुमेश्वरम् ॥ गृहे ते [illegible] त्कालं त्वमिच्छसि ॥३२॥ एवमुक्ता तु हरिणा प्रोवाच हरिवल्लभा ॥ यद्येवं स द्रुमः [illegible] ॥३३॥ मन्युरेष [illegible] गुणं मम ॥ सीमन्तिनीनां सर्वासामधिका स्यामधोक्षज ॥३४॥ तथास्तु प्रथमः कल्प इति तां मधुसूदनः ॥ प्रोवाचाप्रतिमो देवो जगतः [illegible] यः ॥३५॥ तथेत्युक्तेति कृष्णेन तुतोष समितिंजय ॥ सत्यभामा ततामिष्टा कंसनाशनवल्लभा ॥३६॥ ततः स्नातो जगन्नाथः [illegible] सर्वमानन ॥ चकारावश्यकं सर्वं सर्वकामप्रदः सताम् ॥३७॥ दध्यौ च नारदं देवः स्नातो देवमुनिर्नृप ॥ [illegible] जगाम स्नानान्ते मुनिश्रेष्ठो महाद्युते ॥३८॥ [illegible] नरपते सतां गतिरधोक्षजः ॥ सत्यया सह धर्मात्मा यथाविधि अपूजयत् ॥ ३९ ॥ पाद्यो [illegible] मुनेः सात्राजिती स्वयम् ॥ जलं देवः [illegible] कृष्णो भृङ्गारेण ददौ तदा ॥ ४० ॥ अथोपकल्पयामास भुक्त्यर्थं नाथ केशवः ॥ परमान्नं स [illegible] प्रयतात्मा जगद्गुरुः ॥४१॥ ततो [illegible] दत्तं मुनिरुदारधीः ॥ बुभुजे वदतां श्रेष्ठः श्रद्धया परया युतः ॥४२॥ उपस्पृश्य ततस्[illegible] पद्दौ चाशिषः प्रभो ॥ ताश्च प्रीतेन [illegible] केशवः ॥ ४३ ॥ ततः सात्राजितीं देवीं प्रणतां नारदोब्रवीत् ॥ प्रसार्य दक्षिणं हस्तं सजलं [illegible] ॥ ४४ ॥ यथेदानीं [illegible] भव देवि प-तिव्रता ॥ सविशेषं च सुभगा भव मत्तपसो बलात् ॥४५॥ इत्युक्त्वा मुनिमुख्येन सत्यभामा हरिप्रिया ॥ उतस्थौ महता युक्ता हर्षेण [illegible] ॥४६॥

रपि श्लोकयोः स्पष्ट एवार्थः ॥ २६ ॥ २७ ॥ त्वदीयमात्मानमिति शेषः । पक्षे स्पष्टम् ॥ २८ ॥ [illegible] नित्याश्रिमस्थेन संबन्धः ॥ २९ ॥ ३० ॥ ३१ ॥ स्व-र्गास्पदात्स्वर्गस्थानात् ॥ ३२ ॥ ३३ ॥ प्रमृष्टस्त्यक्तः । बहुगुणं सुभगमिति शेषः ॥ ३४ ॥ प्रथमः [illegible] सान्त्वनोपायः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ भृङ्गारेण कनकपात्रेण । भृङ्गारी झिल्लिकायां च कनकालौ पुनः पुमानिति मेदिनी ॥ ४० ॥ [illegible] ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

विघसं देवब्राह्मणशेषम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ सोमः उमया सह वर्तमानः सप्रवरः प्रमथगणयुतः ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ पुण्यं पुण्यकाम्यं व्रतविशेषम् ॥
॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ पुष्पाणीति । तज्जातीयसुगन्धद्रव्यमात्रस्योपलक्षणम् । बहूनि च तानि रूपाणि चेति विग्रहः । रूपाणि इति शब्दात् गान्धर्व-

स कृष्णोऽप्यभ्यनुज्ञां तु लब्ध्वा मुनिवरात्तदा ॥ बुभुजे विघसं धीमानप्रमेयपराक्रमः ॥ ४७ ॥ ततस्त्वावश्यकं कृत्वा सत्यभामापि भारत ॥ अ-
नुज्ञया तदा भर्तुर्विवेशान्तर्गृहं मुदा ॥ ४८ ॥ ततो विनिर्गता देवी कृष्णस्यैवाभ्यनुज्ञया ॥ स्थिता पार्श्वे च कृष्णस्य नमस्कृत्वा महात्मने ॥ ४९ ॥
ततो मुहूर्तमासित्वा नारदः कृष्णमब्रवीत् ॥ आपृच्छे त्वां गमिष्यामि शक्रलोकमधोक्षज ॥ ५० ॥ तत्राद्य देवमीशानं नमस्कृत्य महेश्वरम् ॥ गा-
स्यन्ति देवगन्धर्वास्तथैवाप्सरसां गणाः ॥ ५१ ॥ मासि मास्युचितं ह्येतन्महेन्द्रसदने प्रभो ॥ पूजार्थं देवदेवस्य गान्धर्वं नृत्यमेव च ॥ ५२ ॥ अन्त-
र्हितो देवदेवः सोमः सप्रवरो विभुः ॥ पश्यत्यमरमुख्येन कृतं भक्त्याद्रिघातिना ॥ ५३ ॥ निमन्त्रितोऽहं पूर्वेद्युः पुष्पं दत्तं महाद्युते ॥ पारिजातस्य
भद्रं ते तरुराज्ञो महात्मनः ॥ ५४ ॥ यदेतदाहृतं स्वर्गात्त्वदर्थं तु मया विभो ॥ देवोपभोग्यमेतद्धि तरुराजसमुद्भवम् ॥ ५५ ॥ इष्टः स वृक्षः सततं
शच्याः पुष्करलोचन ॥ सौभाग्यमावहत्येव पूज्यमानोऽपि नित्यशः ॥ ५६ ॥ पुण्यं कर्तुं तदा सृष्टः पारिजातो महाद्रुमः ॥ अदित्या धर्मनित्येन
कश्यपेन महात्मना ॥ ५७ ॥ पुरादित्या महातेजास्तोषितः किल कश्यपः ॥ वरेण च्छन्दयामास मारीचस्तपसो निधिः ॥ ५८ ॥ सोवाच सुभगा
येन भवेयं मुनिसत्तम ॥ स्वलंकृता कामतश्च सर्वैरेव विभूषणैः ॥ ५९ ॥ ईप्सितं गीतनृत्यं च भवेन्मम तपोधन ॥ कुमारी नित्यदा चैव भवेयं
तपसो निधे ॥ ६० ॥ विरजा शोकरहिता भवेयमिति नित्यदा ॥ पतिभक्तिमती चैव धर्मशीला तथैव च ॥ ६१ ॥ पारिजातं ततोऽस्राक्षीददित्याः
प्रियकाम्यया ॥ सर्वकामप्रदैः पुष्पैरावृतं नित्यगन्धदैः ॥ ६२ ॥ त्रिशाखं सर्वदा दृश्यं सर्वभूतमनोहरम् ॥ सर्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे
॥ ६३ ॥ ईदृशान्यपि पुष्पाणि बिभर्त्येकापि रूपिणी ॥ बहुरूपाणि चाप्यन्या पद्मानि च ततोऽपरा ॥ ६४ ॥ मन्दारादपि वृक्षाच्च सारमुद्धृत्य कश्य-
पः ॥ तस्मादेष तरुश्रेष्ठः सर्वेषां श्रेष्ठतां गतः ॥ ६५ ॥ ततस्तत्र निबध्याथ कश्यपं प्रददौ शुभे ॥ अदितिर्मम पुण्यार्थं सौभाग्यार्थं तथैव च ॥ १०१ ॥
॥ ६६ ॥ अदित्या कश्यपो दत्तः पुण्यार्थं च तथा मम ॥ पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ॥ ६७ ॥

मित्यर्थः । रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोरिति मेदिनी । पद्मानीति विविधमात्रस्योपलक्षणम् ॥ ६४ ॥ अतएव मन्दारात् कल्पवृक्षाच्चायं सारभूत इत्यर्थः ॥ ६५ ॥ ततस्तत्र
निबध्येत्यादिना परकृतिसरूपार्थवादेन सौभाग्यकामनया भर्तृसहितस्य पारिजातस्य दानं कर्तव्यम् । निष्क्रयेण पुनर्भर्ता च मोक्तव्य इति विधिरुन्नेयः ॥ ६६ ॥ ६७ ॥

॥ ६८॥६९॥ विष्णुपद्याः गङ्गायाः परि उपरि जात इति पारिजातः स्वार्थेऽण् । संयोगे मन्तुं मानयितुं वियोगे दारयितुं च योग्यानि मन्दाराणि च तानि पुष्पाणि च तैः॥७०॥ कोविदार इत्यविकारात् ॥७१॥७२॥ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि टीकायां सप्तषष्टितमोऽध्यायः ॥६७॥ अष्टषष्टितमेऽध्यायेऽमुष्मिन्नारदसंनिधौ ॥ पारिजातसमाहृत्यै प्रतिज्ञा हरिणा कृता ॥ १ ॥ एवं तावत्पूर्वाध्याये निमन्त्रितोहम्म् पूर्वेद्युः पुण्यं दत्वा महामते इति नारदवचः श्रुत्वा तस्य च स्वकार्योपयोगित्वाद्भगवान्नारद उवा-

निष्क्रयेण मया मुक्तः कश्यपस्तु तपोधनः॥इन्द्रो दत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम ॥ ६८ ॥ सोमश्चाप्यथ रोहिण्या ऋद्ध्या च धनदस्तथा॥ एवं सौभाग्यदो वृक्षः पारिजातो न संशयः ॥ ६९ ॥ पारिजातो विष्णुपद्याः पारिजातेतिशब्दितः ॥ मन्दारपुष्पैर्युक्तो मन्दारस्तेन कथ्यते ॥ ७० ॥ कोप्ययं दारुरित्याहुरजानन्तो यतो जनाः ॥ कोविदार इति ख्यातस्ततः स सुमहातरुः ॥ ७१ ॥ मन्दारः कोविदारश्च पारिजातश्च नामभिः ॥ स वृक्षो ज्ञायते दिव्यो यस्यैतत्कुसुमोत्तमम् ॥ ७२ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ ७ ॥ ॥ वैशम्पायन उवाच ॥ ततो जिगमिषुं तत्र नारदं मुनिसत्तमम् ॥ प्रोवाच भगवान्विष्णुरप्रमेयपराक्रमः ॥ १ ॥ महर्षे धर्मतत्त्वज्ञ स्वर्गं गत्वा त्वयानघ ॥ द्रष्टा सदस्यान्देवस्य त्रिपुरघ्नस्य धीमतः ॥ २ ॥ अनाज्ञया मद्वचनाद्विज्ञाप्यः पाकशासनः ॥ संभावयित्वा भ्रातृत्वं पौराणं वेत्सि यन्मुने ॥ ३ ॥ यमस्राक्षीन्मुनिश्रेष्ठो भगवान्कश्यपस्तरुम् ॥ पारिजातं पुरादित्याः सुखार्थं धर्मसत्तमः ॥ ४ ॥ स पुण्यमतिसौभाग्यं ददाति तरुसत्तमः ॥ तव दत्तं पुरा दानं व्रतेन तरुमुत्तमम् ॥ ५ ॥ देवीभिर्धर्मनित्याभिर्धर्मार्थममरोत्तम ॥ दत्तं श्रुत्वाभिकाङ्क्षन्ति दातुं पत्न्यो मम प्रभो ॥ ६ ॥ पुण्यार्थं दानधर्मार्थं मम प्रीत्यर्थमेव च ॥ आनाययद्द्वारवतीं पारिजातं महाद्रुमम् ॥ ७ ॥ दत्ते दाने पुनः स्वर्गं तरुं त्वं नेतुमर्हसि ॥ स वाच्य एवं भगवान्बलभिद्भवस्त्वया ॥ ८ ॥तथा तथा प्रयत्नश्च कार्योस्मिन्मुनिसत्तम॥यथा तरुवरं दद्यात्पारिजातं सुरेश्वरः ॥९॥ तत्र दूतगुणं तावत्पश्यामस्ते तपोधन ॥ संभाव्या सर्वकृत्यानां संपाद्धि त्वयि मे मता ॥ १० ॥ एवं नारायणेनोक्तो नारदो भगवानृषिः ॥ प्रत्युवाच केशिघ्नमिदं वाक्यं तपोधनः ॥ ११ ॥

चेत्याह। ततो जिगमिषुमिति ॥ १ ॥ अत्र नारदेन पूर्वं स्वप्रयोजनमुक्तम् निमन्त्रितोहं पूर्वेद्युः पुण्यं दत्वा महामते इति तत्कुर्वन्नेव मयापि कार्यं कुर्विति भगवान्नारदमाह। महर्षे इति॥२॥अनाज्ञया श्रेष्ठस्य भृत्यं प्रति यत्प्रेरणरूपं वचनं तदाज्ञा तया विनेत्यर्थः। विज्ञापना उत्तमस्य निकृष्टेन प्रार्थनेति भेदः। पौराणं वामनावतारीयम्॥३॥४॥स दत्तः सन्निति शेषः। तव इन्द्रस्य संबन्धिनं तरुं देवीभिः पूर्वोक्ताभिरदित्यादिभिर्नारदाय दत्तम्। नारदेन च पुनस्तुभ्यं दत्तमिति श्लोकद्वयस्य संबन्धः ॥५॥६॥ आनायय कृष्णः ॥७॥ पूर्वोक्तमर्थं स्पष्टीकरोति। दत्ते दान इति। अस्माकं दानफलं भविष्यति तव तु कापि हानिर्नास्तीत्यर्थः॥८॥९॥१०॥११॥१२॥

॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ शच्याः क्रीडावृक्ष इति मिषेण मोक्षितः मोचितः । शच्या इति छेदः संधिरार्षः । ततो रुद्रात् ॥ १७ ॥ उमया उमायाः ॥ १८ ॥ १९ ॥
॥ २० ॥ देवौ देवी देवश्चेति द्वन्द्वैकशेषः । तौ मां च वर्जयित्वेति संबन्धः ॥ २१ ॥ २२ ॥ गणाः सङ्घाः प्रवराणां प्रमथानाम् ॥ २३ ॥ २४ ॥ सोमम् उमामहितम् ॥ २५ ॥

बाढमेवं प्रवक्ष्यामि यदुमुख्य सुरेश्वर ॥ ननु दास्यति देवेन्द्रः पारिजातं कथंचन ॥ १२ ॥ मन्दरं पर्वतश्रेष्ठं दानवैस्त्रिदशैस्तथा ॥ निक्षिप्य तो-यधौ पूर्वं पारिजातः समाहृतः ॥ १३ ॥ मन्दरात्पर्वतश्रेष्ठात्रायितुं प्रेषितः पुरा ॥ पारिजातं हरेणापि लोककर्त्रा जनार्दन ॥ १४ ॥ स्वयं विज्ञापि-तो गत्वा ततः शक्रेण शंकरः ॥ आक्रीडद्रुम उद्याने शच्याः स्यादिति याचितः ॥ १५ ॥ तथास्त्विति वरो दत्तो महादेवेन चानघ ॥ नच नीतः पारिजातो मन्दरं चित्रकन्दरम् ॥ १६ ॥ क्रीडावृक्षः स शच्येति व्यपदेशेन मोक्षितः ॥ महेन्द्रेण महाबाहो पारिजातस्ततः पुरा ॥ १७ ॥ प्रियार्थ-मुमया साक्षात्पारिजातवनं हरः ॥ गव्यूतिशतविस्तीर्णं मन्दरस्यैव कन्दरम् ॥ १८ ॥ न तत्र सूर्यभाः कृष्ण प्रविशन्ति नगोत्तमे ॥ नच चन्द्रप्रभा शीता नैव कृष्ण सदागतिः॥१९॥शीतोष्णे छन्दतस्तत्र शैलपुत्र्या भवन्ति हि ॥ स्वयंप्रभं वनं तद्धि महादेवस्य तेजसा ॥ २०॥ वर्जयित्वा महादेवौ सगणौ यदुनन्दन ॥ मां चान्यस्तद्वनं दिव्यं न प्रयाति कथंचन ॥ २१ ॥ स्रवन्ति तत्र वार्ष्णेय पारिजाताः समन्ततः ॥ सर्वरत्नानि मुख्यानि मनसा काङ्क्षितानि वै ॥ २२ ॥ गणास्तान्युपभुञ्जन्ति प्रवराणां महात्मनाम् ॥ आज्ञया देवदेवस्य लोकनाथस्य केशव ॥ २३ ॥ पारिजाताद्बहुगुणं फलं तेषां तथा वनम् ॥ अभिमानं प्रभाश्चैव गुणा भूरिगुणास्तथा॥२४॥मूर्तिमन्तश्च ते वृक्षाः सोमं देवं वृषध्वजम् ॥ उपतिष्ठन्ति सततं प्रवरैः सह के-शव ॥२५॥ रौद्रेण तेजसा जुष्टा दुःखैर्हीनाः सुखान्विताः ॥ तरवो मन्दरे ते हि दयिताः शैलकन्यया ॥ २६ ॥ प्रविवेशान्धको नाम घोरस्तत्र महा-बलः ॥ दैतेयो वरदानेन दर्पितः पापनिश्चयः ॥ २७ ॥ स हतो देवदेवेन हरेणामित्रघातिना ॥ अवध्यः सर्वभूतानां वृत्राद्दशगुणं बली ॥ २८॥ एवं दुःखं न ते देव पारिजातं प्रदास्यति ॥ पुष्कराक्ष सहस्राक्षः सत्यमेतद्ब्रवीमि ते ॥२९॥ सततं सहितो देव्या शच्या स हि वरद्रुमः॥सर्वकामप्रदः कृष्ण तथेन्द्राय महौजसे ॥३०॥ श्रीभगवानुवाच ॥ मुने तद्युज्यते साधु महादेवेन धीमता ॥ यच्छचीकारणं कृत्वा न नीतः स तरुः पुरा ॥३१॥ स ज्येष्ठः सर्वभूतानां लोककृत्प्रभवोऽव्ययः ॥ पारावर्यस्य सदृशं कृतवानिति मे मतिः ॥ ३२ ॥

कन्यया कन्यायाः ॥ २६ ॥ वरदानेन सर्वत्र तव गतिरकुण्ठितास्त्वित्येवंरूपेण ॥ २७ ॥ २८ ॥ दुःखं दुःखलभ्यम् ॥ २९ ॥ सहितो हितेनेष्टसुखदानेन युक्तः सहितः ॥
॥ ३० ॥ ३१ ॥ पारावर्यस्य लोकमर्यादायाः ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ विप्लवो भवेत्सर्वेप्यनृतवादिनो भविष्यन्तीत्यर्थः । कारणानुसारित्वात्कार्यस्य ॥ ३७॥ ३८ ॥३९॥ ४० ॥ इति श्रीहरिवंशे विष्णुपर्वणि
टीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥छ॥ एकोनसप्ततितमेध्यायेस्मिन्कृष्णवाक्श्रवात् ॥ पारिजातं न दास्यामीत्याह शक्र इतीर्यते ॥ १ ॥ नारदोऽथेति ॥१ ॥ २ ॥

अहं यवीयान्देवस्य सर्वथा बलघातिनः ॥ लालनीयश्च भगवन् जयन्त इव सत्तम ॥ ३३ ॥ सर्वथा भगवांस्तावदुपायैर्बहुविस्तरैः ॥ करोतु यत्नं
प्रीत्यर्थं शक्तो ह्यसि तपोधन ॥ ३४ ॥ मया मुने प्रतिज्ञातं पुण्यार्थं सत्यभामया ॥ स्वर्गादानयिष्यामि पारिजातमिति प्रभो ॥ ३५ ॥ मया
तदनृतं कर्तुं कथं शक्यं तपोधन ॥ नानृतं हि वचो विप्र प्रोक्तं पूर्वं मयानघ ॥ ३६ ॥ मयि भग्नप्रतिज्ञे वै लोकानां विप्लवो भवेत् ॥ यन्मया हि मु-
निश्रेष्ठ लोकधर्मा गुणान्विताः ॥ परिवार्याः स्थितौ सर्वे स कथं ह्यनृतं वदेत् ॥ ३७ ॥ न देवगन्धर्वगणा न राक्षसा न चासुरा नैव च यक्षपन्नगाः ॥
मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्थाः खलु भद्रमस्तु ते ॥ ३८ ॥ स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवतामरेश्वरः ॥ ततः शची-
व्यामृदितानुलेपने गदां विमोक्ष्यामि पुरंदरोरसि ॥ ३९ ॥ इति प्रवाच्यो यदि सामपूर्वकं प्रयाच्यमानो न तरुं प्रयच्छति ॥ सुनिश्चयं मद्गमनाय
सर्वथा त्वयाऽपि कार्यः खलु तत्र निश्चयः ॥ ४० ॥ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे नारदकृष्णभाषणं नामा-
ष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥ ॥ वैशम्पायन उवाच ॥ नारदोऽथ मुनिर्गत्वा महेन्द्रसदनं प्रति ॥ तां रात्रिमवसत्तत्र ददर्श च महोत्सव-
म् ॥ १ ॥ तत्रादित्या महात्मानो वसवश्च सुरोत्तमाः ॥ राजर्षयश्च विद्वांसः स्वर्गताः कर्मभिः शुभैः ॥ २ ॥ नागा यक्षाश्च सिद्धाश्च चारणाश्च तपो-
धनाः ॥ ब्रह्मर्षयश्च शतशो देवर्षिमनवस्तथा ॥ ३ ॥ सुपर्णाश्च महात्मानो मरुतश्च महाबलाः ॥ दिवौकसां निकायाश्च शतशोऽन्ये समागताः ॥४॥
उपर्युपरि सर्वेषां सोमदेवो महेश्वरः ॥ तस्थावमितविक्रान्तः स्वैर्गणैः परिवारितः ॥ ५ ॥ देवर्षिभिर्मुनिश्रेष्ठैः संवृतः सर्वभावनः ॥ कल्पान्तरसहस्रेषु
क्षयो येषां न विद्यते ॥६॥ यानर्चयन्ति सततं देवा देवेश्वरोपमाः ॥ आत्मज्ञा नावलेपान्धा ये च धर्मपथि स्थिताः ॥ ७ ॥ रुद्राश्च काश्यपा देवम-
प्युपासन्त भारत ॥ स्कन्दश्च भगवानग्निर्गङ्गा च सरितां वरा ॥ ८ ॥ अर्चिष्मांस्तुम्बुरुश्चैव नारदश्च वदतां वरः ॥ नेतारो देवदानामेते हि त-
पसान्विताः ॥ ९ ॥ एताननुविधीयन्ते सर्वदेवगणा नृप ॥ धर्मनित्यास्तपोनित्याः सतां मार्गमुपाश्रिताः ॥ १० ॥

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ नावलेपान्धाः गर्वहीनाः ॥ ७ ॥ ८ ॥ नारिर्गन्धर्वविशेषः ॥ ९ ॥ अनुविधीयन्ते अनुसरन्ति ॥ १० ॥

तान् मानुषान् अर्चयन्ति इष्टफलप्रदानेन पूजयन्ति ॥ ११ ॥ देवानां कृत्येषु ये वर्तन्त इति च ज्ञेयम् । अनुष्ठिताः अनुष्ठितवन्तः ॥ १२ ॥ १३ ॥ षड्गुणान् वक्रिमस्निग्धमधु-
रलास्यविभक्तावबद्धाख्यान् ॥ १४ ॥ १५ ॥ जुजोप प्रीत्या जग्राह । उपस्थानं नृत्यादिरूपां परिचर्याम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्यैवार्तिहरणं कार्यम्

ये त्विमे मानुषा देवा अर्चयन्ति शुभार्थिनः ॥ तानर्चयन्ति ह्यमरास्तथा राजञ्छुभार्थिनः ॥ ११ ॥ पितृकृत्येषु देवानां संन्यासं ये त्वनुष्ठिताः ॥
स्वाध्यायवन्तः कौरव्य सदा नियमचारिणः ॥ १२ ॥ गन्धर्वाधिपतिः श्रीमांस्तत्र चित्ररथो नृप ॥ सपुत्रो वादयामास देववाद्यानि हृष्टवत् ॥ १३ ॥
ऊर्णायुश्चित्रसेनश्च हाहा हूहूस्तथैव च ॥ डुम्बरस्तुम्बरुश्चैव जगुरन्ये च षड्गुणान् ॥ १४ ॥ उर्वशी विप्रचित्तिश्च हेमा रम्भा च भारत ॥ हेमदन्ता
घृताची च सहजन्या तथैव च ॥ १५ ॥ जुजोप भगवान्देवस्तदुपस्थानमात्मवान् ॥ वृत्तेन तुष्टः शक्रस्य जगाम जगतो गतिः ॥ १६ ॥ गते भू-
तपतौ सर्वे नृपा जग्मुर्यथागतम् ॥ महेन्द्रेणार्चिता देवाः स्वानेव निलयान्गताः ॥ १७ ॥ ततः सर्वेषु यातेषु सुखासीनं पुरंदरम् ॥ सदस्यैः स्वैः
सहासीनं नारदोऽभिययौ मुनिः ॥ १८ ॥ तमिन्द्रः पूजयामास समुत्थाय तपोधनम् ॥ दिदेश कुशगर्भं च पीठमात्मासनोपमम् ॥ १९ ॥ नारदोऽथ
महातेजा महेन्द्रमिदमब्रवीत् ॥ दूतोऽहममरश्रेष्ठ विष्णोरतुलतेजसः ॥ २० ॥ किंचित्कार्यं पुरस्कृत्य प्रेषितोऽस्मि महात्मना ॥ आनर्तादार्तिहरणं
तस्यैवानघतेजसः ॥ २१ ॥ प्रीतिवाक्यानि हृद्यानि प्रयुज्य मुनये तदा ॥ ततः प्रहृष्टो भगवानब्रवीत्पाकशासनः ॥ २२ ॥ किमाह पुरुषश्रेष्ठः शी-
घ्रमाचक्ष्व मे मुने ॥ चिरस्य खलु कृष्णेन संस्मृतोऽस्मि महात्मना ॥ २३ ॥ ॥ नारद उवाच ॥ ॥ महेन्द्रेन्द्रानुजं द्रष्टुं गतोऽहं भ्रातरं तव ॥
कथंचिद्द्वारकां तत्र काश्यपानां यशस्करम् ॥ २४ ॥ तं तु रैवतकेऽद्राक्षं तदासीनमरिंदमम् ॥ रुक्मिण्या सहितं वीरं स्तुवन्तं वृषभध्वजम् ॥ २५ ॥
पारिजाततरोः पुष्पं तस्य दत्तं मयानघ ॥ विस्मापनार्थं देवेश पत्नीनामुरुतेजसः ॥ २६ ॥ तद्दृष्ट्वा तस्य पत्न्यस्तु विस्मयं परमं ययुः ॥ बहुका-
मप्रदं पुष्पं वृक्षराजसमुद्भवम् ॥ २७ ॥ गुणास्तासां मया ख्यातास्तस्य पुष्पस्य मानद ॥ सृष्टिश्च पारिजातस्य कश्यपेन महात्मना ॥ २८ ॥ अ-
दित्या कश्यपो दत्तः पुण्यार्थं च यथा मम ॥ पुष्पदाम्ना वेष्टयित्वा कण्ठे पुण्यार्थमात्मवान् ॥ २९ ॥ त्वं च दत्तो यथा शच्या देवाश्चान्ये सुरेश्वर ॥
निष्क्रयश्च यथा दत्तः कश्यपाद्यैर्महर्षिभिः ॥ ३० ॥ तच्छ्रुत्वा तस्य पत्न्येका सत्यभामेति विश्रुता ॥ पुण्यकार्थं मनश्चक्रे दयिता ते यवीयसः
॥ ३१ ॥ तया चाभ्यर्थितो भर्ता देव देव्या गणेश्वरः ॥ प्रतिजज्ञे स धर्मार्थं यवीयांस्तव मानद ॥ ३२ ॥

॥ २१ ॥ २२ ॥ चिरस्य चिरेण ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ तासां कृष्णपत्नीनां पुरः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ भजासनमित्यनेन दूतत्वान्निष्ठन्नेवैतावद्वचनं नारद उक्तवानिति गम्यते ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥
॥ ४५ ॥ प्रवर्तामि प्रवर्ते ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ त्रिदिवस्थः सन् त्वमपीति संबन्धः नत्ववनिस्थ इत्यर्थः ॥ ५२ ॥ आमिषभोज्यानां मांसभक्षैः

ततो मामुक्तवान्वीरो विष्णुर्बलवतां वरः ॥ यथावत्सुरमुख्येश ब्रुवतः शृणु भावतः ॥३३॥ लालनीयो यवीयांस्तु प्रणिपत्याच्युतोऽब्रवीत् ॥ आनये-
यं सुरश्रेष्ठ पारिजातं वरद्रुमम् ॥ ३४ ॥ मनोरथोऽस्तु सफलो वध्वास्तेऽसुरसूदन ॥ धर्मकृत्ये विशेषेण वध्वास्ते सुरसत्तम ॥ ३५ ॥ अयं दर्शित-
कल्याणो लोको लोकगणेश्वर ॥ पश्यन्त्वमरकल्याणं मत्प्रभावाच्च मानवाः ॥ ३६ ॥ वैशम्पायन उवाच ॥ वासुदेववचः श्रुत्वा महेन्द्रः कुलनन्दन॥
नारदं वदतां श्रेष्ठमिदं वाक्यमथाब्रवीत् ॥ ३७ ॥ भजासनं द्विजश्रेष्ठ युक्तमुक्तं त्वया द्विज ॥ संदेशं प्रतिदास्यामि विष्णोरतुलतेजसः ॥ ३८ ॥
आसीने नारदे शक्रो लब्धानुज्ञोऽथ नारदात् ॥ स्वमासनं ततो भेजे तस्यैव सदृशं प्रभो ॥ ३९ ॥ उपविष्टः सुरपतिरथोवाच तपोधनम् ॥ निरीक्ष्य
स्वबलं वीर्यं हर्षदं वृत्रनाशनः ॥ ४० ॥ शक्र उवाच ॥ महर्षे कुशलं पृष्ट्वा वक्तव्यस्ते जनार्दनः ॥ वचनान्मम धर्मज्ञ सर्वभूतसुखावहः ॥ ४१ ॥
मदनन्तरमीशस्त्वं जगतो नात्र संशयः ॥ त्वदीयः पारिजातश्च रत्नान्यन्यानि चाच्युत ॥ ४२ ॥ त्वं तु भारावतरणं कर्तुं देव महीं गतः ॥ मानुष्यं
सर्ववृत्तानां स्थितः कार्यस्य सिद्धये ॥ ४३ ॥ त्वयि तीर्णप्रतिज्ञे हि पुनः प्राप्ते त्रिविष्टपम् ॥ पूरयिष्यामि वध्वास्ते इष्टान्कामानधोक्षज ॥ ४४ ॥
स्वर्गीयानि च रत्नानि न नेतव्यानि केशव ॥ स्वल्पार्थे मानुषं लोकमिति पूर्वकृता स्थितिः ॥ ४५ ॥ उत्क्रम्य हि स्थितिं दैवीं प्रवर्तामि महाबल ॥
यद्यहं किं प्रवक्ष्यन्ति प्रजापतिगणाः प्रभो ॥ ४६ ॥ ब्रह्मणा सह पुत्रेण सपौत्रेण महात्मना ॥ नियमाः सर्वकृत्यानां स्थापिता जगतो ध्रुवाः॥४७॥
प्रजापतिकृतं मार्गमपास्य व्रजतो मम ॥ श्रुत्वा प्रजापतिर्धीमाञ्छापमप्युत्सृजेत्प्रभुः ॥ ४८ ॥ अस्माभिर्भिद्यमानं हि मर्यादासेतुबन्धनम् ॥
भेत्स्यन्त्यशङ्किता दैत्या दैत्यपक्षास्तथाऽपरे ॥ ४९ ॥ स्त्रीनिमित्तमितो नीते पारिजाते द्रुमेश्वरे ॥ स्वर्गौकसो भविष्यन्ति विमनस्काश्च मानद ॥
॥ ५० ॥ उपभोगा मनुष्याणां विहिता ये स्वयंभुवा ॥ तैस्तु तुष्यतु मे भ्राता संपश्यन्कालपर्ययम् ॥ ५१ ॥ इहापि तात त्रिदिवे मम यः स्यात्प-
रिग्रहः ॥ त्रिदिवस्थोऽपि तं कृष्णः सर्वं भोक्तुमिहार्हति ॥ ५२ ॥ हृष्टो ह्यामिषभोज्यानामभिमानाज्जनार्दनः ॥ ततो धर्मं समुत्सृज्य
पापमेवानुवर्तते ॥ ५३ ॥

हृष्टः पुष्टः अत एव दृप्तत्वाद्धर्ममतिक्रामति । यथाहापस्तम्बः । हृष्टो दृप्यति दृप्तो धर्ममतिक्रामतीति ॥ ५३ ॥

॥ ५४ ॥ मानुषे लोके ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ...नः अतिश्रेष्ठ... ॥ ६८ ॥
न क्षमं न योग्यम् ॥ ६९ ॥ कार्यं कर्म कार्यं कर्तव्यम् ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायामेकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ ७० ॥

स्त्रीवश्यता ख्याप्यमाना कृष्णस्य हि महात्मनः ॥ जगत्त्रययशसा योगं जनयेदिति मे मतिः ॥ ५४ ॥ मानुष्यं मानुषे प्राप्तो यदेतन्मधुसूदनः ॥ कु-
र्यान्निर्बन्धनीयं यद्भ्रात्रा ज्येष्ठेन नारद ॥ ५५ ॥ स्वर्गसर्वस्वलोपेन धर्षणा स्यान्ममानघ ॥ ज्ञातितो धर्षणा चैव विशेषेणैव गर्हिता ॥ ५६ ॥ धर्म-
मर्थं च कामं च क्रमेण मधुसूदनः ॥ सेवत्वेष सतां धर्मान्स्थापितान्पद्मयोनिना ॥ ५७ ॥ महीतलं पारिजातमपयिष्याम्यहं यदि ॥ पौलोमी...
कृत्वा को नु मां बहु मंस्यते ॥ ५८ ॥ पारिजातं महीपृष्ठे दृष्ट्वा पृष्ट्वा च मानुषाः ॥ स्वर्गार्थं नाद्रियिष्यन्ति दृष्ट्वा स्वर्गफलं क्षितौ ॥ ५९ ॥ पारि-
जातगुणान्मर्त्या जुषन्ति यदि नारद ॥ देवतानां मनुष्याणां न विशेषो भविष्यति ॥ ६० ॥ तत्र यत्क्रियते कर्म इह तद्भुज्यते नरैः ॥ स्वर्गार्थं न
यतिष्यन्ति पारिजातगुणान्विताः ॥ ६१ ॥ सर्वरत्नवरः स्वर्गे पारिजातस्तपोधन ॥ तुल्यं देवसमैर्मर्त्यैः सर्वदेव जगद्भवेत् ॥ ६२ ॥ यज्ञैर्मर्त्या न
यक्ष्यन्ति लब्धस्वर्गफला भुवि ॥ न पूर्तानि प्रदास्यन्ति तुल्यत्वममरैर्गताः ॥ ६३ ॥ यज्ञजप्याह्निकैश्चैव नित्यमाप्याययन्ति नः ॥ मानुषाः स्वर्गमि-
च्छन्तः श्रद्दधानास्तपोधन ॥ ६४ ॥ तत्सर्वं न करिष्यन्ति पारिजातगुणान्विताः ॥ निस्तेजसो भविष्याम ते गतास्त द्विहीनताम् ॥ ६५ ॥ इतः
सुवृष्ट्या सस्यैस्ते जीवन्ति पुरुषा भुवि ॥ आप्याययन्तस्तेऽप्यस्मान्दानैर्यज्ञैस्तथैव च ॥ ६६ ॥ न बुभुक्षा पिपासा वा बाधते यदि मानुषान् ॥
रोगो जरा वा मृत्युर्वा धर्मज्वरतिरेव च ॥ ६७ ॥ दौर्गन्ध्यं वा सुघोरा वा ईतयः कर्मसंभवाः ॥ किमुद्योगं करिष्यन्ति पारिजातगुणान्विताः ॥ ६८ ॥
सर्वथा नयनं तत्र पारिजातस्य न क्षमम् ॥ इति वाच्यस्त्वया विप्र विष्णुरक्लिष्टकर्मकृत् ॥ ६९ ॥ यथा यथा च मे भ्राता तुष्यत्येतद्विचारयन् ॥ तथा
तथा त्वया कार्यं कार्यं मत्प्रीतिमिच्छता ॥ ७० ॥ हाराश्च मणयश्चैव चन्दनान्यगुरूणि च ॥ वस्त्राणि च विचित्राणि वध्वास्त्वं द्वारकां नय ॥ ७१ ॥ योग्यानि
यानि मर्त्यानां यावदिच्छति केशवः ॥ न स्वर्गपरिमोषं तु कर्तुमर्हति साम्प्रतम् ॥ ७२ ॥ ददामि रत्नानि यथेप्सितान्यहं बहूनि चित्राणि विभूषणानि च ॥
न पारिजातं च कथंचन द्रुमं मुने प्रदास्यामि दिवौकसां प्रियम् ॥ ७३ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे इन्द्रवाक्यं नामै-
कोनसप्ततितमोऽध्यायः ॥ ६९ ॥ वैशम्पायन उवाच ॥ देवराजवचः श्रुत्वा नारदः कुरुनन्दन ॥ प्रोवाच वाक्यं वाक्यज्ञो धर्मात्मा धर्मवित्तमः ॥ १ ॥

अथास्मिन्सप्ततितमे प्रतिज्ञां नारदेरिताम् ॥ कृष्णस्य बलभिच्छ्रुत्वा न दास्यामीत्यवादीत् ॥ १ ॥ देवराजेति ॥ १ ॥

॥ २ ॥ ३ ॥ हेतवः महीतलं पारिजातमित्यादिना पूर्वोक्ताः । न चावगतवान् नाङ्गीकृतवान् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

अवश्यमेव वक्तव्यं हितं बलनिषूदन॥मया तव महाबाहो बहुमानोऽस्ति मे त्वयि ॥२॥ उक्तो मया वासुदेवो जानता भवतो मतम्॥न दत्तः पारिजा-
तोयं हरस्यापि त्वया पुरा ॥ ३ ॥ हेतवश्च मया तस्य दर्शितास्ते समासतः ॥ न चावगतवान्देवः सत्यमेतद्ब्रवीमि ते ॥ ४ ॥ उपेन्द्रोऽहं महेन्द्रेण ला-
लनीयः सदेति माम् ॥ उवाच पुण्डरीकाक्षो दत्तमुत्तरमेव च ॥५॥ पुनः पुनर्मया वास्य हेतवो देव दर्शिताः॥ततो न बुद्धिर्व्यावृत्ता वृत्रनाशन तस्य
वै ॥ ६ ॥ अपि चाप्युक्तवान्देवो वाक्यान्ते मधुसूदनः ॥ प्रत्याह पुरुषश्रेष्ठः सरोषमिव वासव ॥ ७ ॥ न देवगन्धर्वगणा न राक्षसा न चासुरा नैव च
पन्नगोत्तमाः॥मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्थाः खलु भद्रमस्तु ते ॥८ ॥ स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवता पुरंदरः ॥ ततः
शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरंदरोरसि ॥ ९ ॥ उपेन्द्रस्य महेन्द्राय भ्रातुस्ते निश्चयः परः ॥ यदत्र मन्यसे न्याय्यं संप्रधार्य कुरुष्व
तत् ॥ १० ॥ तत्त्वं हितं च देवेश श्रूयतां वदतो मम ॥ नयनं पारिजातस्य द्वारकां मम रोचते ॥ ११ ॥ नारदेनैवमुक्तस्तु सुव्यक्तं बलदेहभित् ॥
रोषाविष्टः सहस्राक्षोऽब्रवीदेतन्नराधिप ॥ १२ ॥ अनागारि मयि ज्येष्ठे सोदरे यदि केशवः ॥ एवं प्रवृत्तः किं शक्यं कर्तुमद्य तपोधन ॥ १३ ॥ बहूनि
प्रतिलोमानि पुरा स कृतवान्मयि ॥ कृष्णो नारद सोढानि भ्रातेति स्म मया सदा ॥ १४ ॥ खाण्डवे चार्जुनरथं पुरा वाहयता सता ॥ मर्दी मा ना-
रिता मेघाः शमयन्तोऽग्निमुद्धतम् ॥ १५ ॥ गोवर्द्धनं धारयता विप्रियं च कृतं मम ॥ तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया ॥ १६ ॥ समोऽहमि-
ति सर्वेषां भूतानामिति चोक्तवान् ॥ स्वबाहुबलमाश्रित्य वृत्रश्च निहतो मया ॥ १७ ॥ देवासुरेषु प्राप्तेषु संग्रामेषु च नारद ॥ युध्यत्यार्थे [illegible]
कृष्णो मुने सुविदितं तव ॥ १८ ॥ बहुनात्र किमुक्तेन तस्मादिष्टया प्रवर्तताम् ॥ ज्ञातिभेदो न नः कार्यः साक्षी त्वं मम नारद ॥ १९ ॥ [illegible]
गदां मोक्तुमुद्यतो यदि केशवः ॥ अनुशब्दश्चाथ पौलोमीं गुणः क इह दृश्यते ॥ २० ॥ उदवासगतोधीमान्पिता नः कश्यपः प्रभुः ॥ अदित्या सह
मे मात्रा तयोर्वाक्यमिदं भवेत् ॥ २१ ॥ अजितात्मा मम भ्राता रजसा तमसा वृतः ॥ कामेन च स्त्रिया वाक्यादेव मामुक्तवान्गुरुम् ॥ २२ ॥ धिक्
स्त्रियः सर्वथा विप्र धिग्र राजसमतिं तथा ॥ यत्राधिक्षिप्तवान्विष्णुरेवं मां स्त्रीजितो द्विज ॥ २३ ॥ न दृष्टं कश्यपकुले व्यपदेश्यं महामुने ॥ नैव द-
क्षकुलं दृष्टं मातुर्मे यत्र संभवः ॥ २४ ॥ न ज्येष्ठता न राजत्वं देवानां प्रतिमानितम् ॥ कामरागाभिभूतेन कृष्णेन खलु नारद ॥ २५ ॥

॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ज्ञातिभेदः भ्रातृकलहः नोऽस्माभिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ व्यपदेश्यं वाच्यम ॥ २४ ॥ २५ ॥

॥ २६ ॥ आहार्यः संयोज्यः संपाद्यो वा ॥ २७ ॥ २८ ॥ २९ ॥ धनुर्ज्यायामिति शतपथोक्त इतिहासोऽवगमितः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ऐन्द्रमैन्द्राधिपत्यं श्राव-णभाद्रपदपूज्यत्वं वैष्णवं कृत्वाहं ददौ दत्तवान्वैचित्र्येनात्र परीक्षता ॥ ३४ ॥ अन्यत्र समरेऽहमग्रतः प्रहरामि यतो राजा प्रभुः ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ परिभाषितः

पुत्रदारसहस्रैर्हि भ्रातानघ विशिष्यते ॥ सद्वृत्ते ज्ञानसंपन्न इति ब्रह्मा पुराब्रवीत् ॥२६॥ नास्ति भ्रातृसमो बन्धुराहार्य इतरो जनः ॥ इति मामब्रवी-न्माता पिता चैव प्रजापतिः ॥२७॥ सोदरे तु विशेषं तु पिता मे कश्यपोऽब्रवीत् ॥ हत्वा मया विरुद्धचन्ते दानवाः पापनिश्चयाः ॥२८॥ काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितम् ॥ प्राप्तस्त्ववसरो विप्र यदिहात्रोच्यते मया ॥२९॥ धनुर्ज्यायां मुनिश्रेष्ठ छिन्नायां हि पुरानघ ॥ धन्त्रीभिरमराणां च वरदानान्महामुने ॥ ३० ॥ उत्कृत्तशिरसो विष्णोः पुरा देहो धृतो मया ॥ संधिते च शिरो यन्नाच्छिन्नं रौद्रेण तेजसा ॥ ३१ ॥ अहं विशिष्टो देवा-नामित्युक्त्वा पुनरच्युतः ॥ धनुरारोप्य दर्पेण स्थितो नारद केशवः ॥ ३२ ॥ किं मां पिता वा माता वा वक्ष्यतीति मया मुने ॥ स्नेहेन च स्थितं विष्णोः शरीरं मुनिसत्तम ॥ ३३ ॥ ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ ॥ यवीयांसमहं प्रेम्णा कृष्णं पश्यामि नारद ॥ ३४ ॥ संग्रामेषु प्रहर्तव्यं तेन पूर्वं तपोधन ॥ राजा किलाहं समरे प्रहराम्यग्रतो ध्रुवम् ॥३५॥ प्रादुर्भावेषु सर्वेषु स्वशरीरमिवानघ ॥ यतो रक्ष्यामि धर्मज्ञ केशवं भक्तिमा-श्रितम् ॥ ३६ ॥ इदं भङ्क्त्वा मदीयं च भवनं विष्णुना कृतम् ॥ उपर्युपरि लोकानामधिकं भुवनं मुने ॥३७॥ अवमानः स च मया पृष्ठतः क्रिय-ते मुने ॥ लालनीयो मया बाल इत्येवं भ्रातृगौरवात् ॥३८॥ बालोयं मम पुत्रोति यवीयानिति नारद ॥ पित्रा मात्रा च गोविन्दो मानी च परिभाषि-तः ॥३९॥ इष्टस्तत्र जनानां च केशवः सुविशेषतः ॥ वयं द्वेष्या न संदेहस्तत्र स्नेहोऽतिरिच्यते ॥४०॥ सर्वज्ञो बलवाञ्छूरः पात्रं मानयिता तथा॥ केशवेत्येव च ध्यानं यत्ताद्रितथतां गतम् ॥४१॥ गच्छ नारद वक्तव्यः केशवो वचनान्मम ॥ आहूतो न निवर्तेयं समरं प्रति शत्रुभिः ॥४२॥ यदी-च्छसि तदागच्छ सह्यं ते यत्त्वमिच्छसि ॥ प्रहरस्व च पूर्वं त्वं भार्याजित यथेच्छसि ॥ ४३ ॥ रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन च ॥ प्रहरारुह्य गरुडं दृढो भूत्वा जनार्दन॥४४॥ प्रहृते प्रहरिष्यामि यथाशक्त्या च केशव ॥ अहो धिग्यदि मां स्नेहो विक्लवं न करिष्यति॥४५॥ यावन्न संग्रामगतो जितोहं चक्रपाणिना ॥ पारिजातं न दास्यामि तावद्वो मुनिसत्तम ॥ ४६ ॥ मां समाह्वयते ज्येष्ठं यवीयान् स तपोधन ॥ अहं तं मर्षयिष्यामि कि-मर्थं स्त्रीजितं हरिम् ॥ ४७ ॥ अद्यैव गच्छ भगवन्द्वारकां कृष्णपालिताम् ॥ विवादे संस्थितः सोऽत्र इति वाच्यस्त्वयाऽच्युतः ॥ ४८ ॥

आक्रुष्टः ॥ ३९ ॥ ४० ॥ केशवेत्येवेति संधिरार्षः ॥ ४१ ॥ ४२ ॥ सह्यं सोढव्यम् ॥ ४३ ॥ रथाङ्गेन चक्रेण । नन्दकेन खड्गेन ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

पलाशपत्रार्धमिति । त्वया अजितः पारिजातस्य पलाशं पत्रमात्रं पत्रार्द्धं वा न प्रदास्यति वृक्षस्य का वार्तेत्यर्थः ॥ ४९ ॥ जिह्मतां कुटिलताम् ॥ ५० ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायां सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ ७१ ॥ अथैकसप्ततितमेऽध्याये शक्रविनिश्चयम् ॥ सनिर्बन्धं हरेर्वक्तुं नारदो द्वारकां गतः ॥ १ ॥ महेन्द्रेति ॥ १ ॥ २ ॥ अनियुक्तपुरोभागः अनाज्ञप्तः सन् पुरोवर्त्ती न भवेत् तन्निश्चितम् ॥ ३ ॥ तथापि यतः भवानपि कार्याकार्ये मां पृच्छति ततोहम् अननुपृष्टोपि तुभ्यं हितं वदामीत्यर्थः ॥४॥

पलाशपत्रार्द्धमपि त्वयाजितो न पारिजातस्य तव प्रदास्यति ॥ इति प्रवाच्यो मधुसूदनस्त्वया वचो मदीयं स्मरता तपोधन ॥ ४९ ॥ पुनः प्रवाच्यो भगवंस्त्वयाच्युतो मम प्रियार्थं खलु निर्विशङ्कितम् ॥ न मायया हर्त्तुमिहार्हसि द्रुमं सुयुद्धमेवास्तु धिगस्तु जिह्मताम् ॥ ५० ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारिजातहरणे इन्द्रवाक्यं नाम सप्ततितमोऽध्यायः ॥७०॥ ॥ ७१ ॥ ॥ वैशम्पायन उवाच ॥ महेन्द्रवचनं श्रुत्वा नारदो वदतां वरः ॥ विविक्ते देवराजानमिदं वचनमब्रवीत् ॥ १ ॥ कामं प्रियाणि राजानो वक्तव्या नात्र संशयः ॥ प्राप्तकालं तु वक्तव्यं हितमप्रियमप्युत ॥ २ ॥ अनियुक्तपुरोभागो न स्यादिति वदन्ति हि ॥ सुलोकगतितत्त्वज्ञो नयविज्ञानकोविदः ॥ ३ ॥ कार्याकार्ये समुत्पन्ने परिपृच्छति मां भवान् ॥ यतस्ततः प्रवक्ष्यामि गृह्यतां यदि रोचते ॥ ४ ॥ अनुक्तेनापि सुहृदा वक्तव्यं जानता हितम् ॥ न्याय्यं च प्राप्तकालं च पराभवमनिच्छता ॥५॥ वक्तव्यं सर्वथा सद्भिरप्रियं चापि यद्धितम् ॥ आनृण्यमेतत्स्नेहस्य सद्भिरेवाहृतं पुरा ॥६॥ अनृते धर्मभग्ने च न शुश्रूषति चाप्रिये ॥ न प्रियं न हितं वाच्यं सद्भिरेवेति निन्दिताः ॥ ७ ॥ सर्वथा देव वक्तव्यं श्रूयतां शृण्वतां वर ॥ श्रुत्वा च कुरु सर्वज्ञ मम श्रेयस्करं वचः ॥ ८ ॥ अन्योन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक ॥ भवत्यानन्दकृद्देव द्विषतां नात्र संशयः ॥ ९ ॥ हितानुबन्धसहितं कार्यं ज्ञेयं सुरेश्वर ॥ विपरीतं च तद्बुद्ध्वा नित्यं बुद्धिमतां वर ॥ १० ॥ यत्स्यात्तापकरं पश्चादारब्धं कार्यमीदृशम् ॥ आरम्भेनैव तद्विद्वानेष बुद्धिमतां नयः ॥ ११ ॥ विपाकमस्य कार्यस्य नानुपश्यामि शोभनम् ॥ यदत्र कारणं देव निबोध विबुधाधिप ॥ १२ ॥ य एको विश्वमध्यास्ते प्रधानं जगतो हरिः ॥ प्रकृत्या यं परं सर्वे क्षेत्रज्ञं वै विदुर्बुधाः ॥ १३ ॥

॥ ५ ॥ अप्रियम् अतिकटुकमपि हितं परिणामसुखम् ॥ ६ ॥ अनृत इति । त्वय्यनृतत्वाद्यभावात्त्वां प्रति वदामीत्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ विपाकं फलम् ॥ १२ ॥ विश्वं कार्यं प्रधानं कारणं च अध्यास्ते अधितिष्ठति रथमिव यन्ता । प्रकृत्या मायया तत्क्षेत्रं कारणस्थूलसूक्ष्मदेहाख्यं प्रकाशयतीति क्षेत्रज्ञत्वम् ॥ १३ ॥

अव्यक्तस्य अव्याकृतस्य व्यक्तो भागः कार्यं हिरण्यगर्भादिः यः सर्वभवोद्भवः सर्वसंसारबीजं तस्यात्मा अन्तर्यामी चेतयिता । न केवलं तस्यैव अपितु सर्वस्य धीमतः चेतना-वतः जन्तुमात्रस्येत्यर्थः ॥ १४ ॥ रुद्रादप्ययमनन्य इत्याह । प्रकृत्या इति । प्रकृत्याः निष्कृष्टः प्रथमो मुख्यांशः व्यक्तः दृश्यमानाकारः विश्वस्त्रीसंज्ञः स्त्रीरूपोऽप्ययमनन्य इत्यर्थः । अत एव लोकश्चेतनस्तस्य भावनः संतर्पयिता ॥ १५ ॥ तस्याः प्रकृतेः प्रथमो गुण उमातत्त्वं गुणी उमया रुक्मिण्या वा उपहितो गुणी महेश्वरः रुद्रो विष्णुर्वा ॥ ॥ १६ ॥ तदेवाह । नेति अर्द्धेन । गुणिनो मायाविनो रुद्रस्य विष्णोर्वा विशेषो भेदको गुणो नास्ति । अतो विष्णुना शापितं त्वां रुद्रोऽपि न रक्षिष्यतीति भावः । गुणिन इति

तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः ॥ तस्यात्मा परमो देवो विष्णुः सर्वस्य धीमतः ॥ १४ ॥ प्रकृत्याः प्रथमो भाग उमा देवी यश-स्विनी ॥ व्यक्तः सर्वमयो विश्वस्त्रीसंज्ञो लोकभावनः ॥ १५ ॥ रुक्मिण्याद्याः स्त्रियस्तस्या व्यक्तत्वे प्रथमो गुणः ॥ अव्यया प्रकृतिर्देवी गुणी देवो महेश्वरः ॥ १६ ॥ न विशेषोस्य रुद्रस्य विष्णोश्चानरसत्तम ॥ गुणिनश्चाव्ययः शास्ता सदा च प्रथमो गुणः ॥ १७ ॥ नारायणो महातेजाः सर्व-कृल्लोकभावनः ॥ भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ॥ १८ ॥ ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना ॥ महादेवेन देवेश प्रजापतिग-णास्तथा ॥ १९ ॥ एवं पुराणपुरुषो विष्णुर्देवेषु पठ्यते ॥ अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथा ॥२०॥ अदित्या तपसा विष्णुर्महात्माराधितः पुरा ॥ वरेण च्छन्दिता तेन परितुष्टेन चादितिः ॥ २१ ॥ तयोक्तस्त्वत्समं पुत्रमिच्छामीति सुरोत्तम ॥ प्रणिपत्य च विज्ञाय नारायणमधोक्षजम् ॥ ॥ २२ ॥ तेनोक्तं भुवने नास्ति मत्समः पुरुषोऽपरः ॥ अंशेन तु भविष्यामि पुत्रः खल्वहमेव ते ॥२३॥ स जातः सर्वकृद्देवो भ्राता तव सुरेश्वर ॥ नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ॥ २४ ॥ इच्छयैव हरिर्देव काश्यपत्वमुपागतः ॥ तैस्तैर्भावैर्विकुरुते भूतभव्यभवाप्ययः ॥ २५ ॥ प्रादुर्भावं गतो देवो जगतो हितकाम्यया ॥ माथुरं जगतो नाथः कर्त्ता हर्त्ता च केशवः ॥ २६ ॥ यथा पललपिण्डः स्यादृव्याप्तः स्नेहेन मानद ॥ तथा जग-दिदं व्याप्तं विष्णुना प्रभविष्णुना ॥ २७ ॥

सार्द्धश्लोकद्वयं वाक्यम् । किंच तस्य गुणिनोपि यः शास्ता अव्ययोऽपरिणामी प्रथमो-ऽध्यस्तात्पूर्वत्वादधिष्ठानस्य यतः अगुणो यः स एव नारायणः । एतेन तुर्यमूर्तिर्नारायण इति दर्शितम् । सा च ब्रह्मविष्णुरुद्रेभ्य एकैकगुणोपाधिभ्योऽन्या सर्वगुणोपाधिमयी । तेनैव यो भोक्ता रुद्रः कर्त्ता विष्णुः ब्रह्मा च बुद्ध्यभिमानी देवाश्च इन्द्रियाभिमानिनस्ते सर्वे सृष्टा इति योजना ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ छन्दिता अनुग्रहीता ॥ २१ ॥ तयेति पञ्चानां तात्पर्यम् । त्वद्भ्रातृत्वान्न तवायं साधारणोऽपितु अकर्मजनितो देवभावोऽस्यास्ति । त्वंतु कर्मदेवत्वात्ततो निकृष्टोसीत्यर्थः ॥२२॥२३॥ २४॥ भूतस्य भव्यस्य च भवाप्यय उत्पत्तिप्रलयस्थानं सर्वजगदुपादानभूत इत्यर्थः ॥ २५ ॥ य एवंभूतः स एव साक्षात्कृष्ण इत्याह । प्रादुर्भावमिति ॥ २६ ॥ पललपिण्डः मांसपिण्डः ॥ २७ ॥

सर्वात्मा व्यष्टिसमष्टिदेहेन्द्रियाद्याकारस्तैस्तैर्भावैस्तत्तद्धर्मैर्विकुर्वति विकारं प्राप्नोति । सर्वज्ञोऽहं दुःख्यहमित्याद्यभिमानवान्भवतीत्यर्थः । वस्तुतस्त्वतिगुणो गुणातीतः ॥ २८ ॥ ॥ २९ ॥ अनन्तः शेषः धारणार्थं भुव इति शेषः ॥ ३० ॥ श्वेत इति । अत्र, कलिः शयानो भवति संजिहानस्तु द्वापरः । उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन्निति श्रुतेः ॥ योऽविद्यानिद्रायां शेतेऽतिमूढः स पुमान्कलिः । तदनुग्रहार्थं अस्मिन् ईश्वरः कृष्णः कृष्णावताररूपी भवति । यः किंचित् श्रेयोदर्शी अर्द्धप्रबुद्धः स द्वापरः । तं प्रति पीतवर्णः हिरण्यवन्मनोहरो भवति । स किंचिद्धर्मस्युन्मुखो भवतीत्यर्थः । यस्तु श्रेयोर्थे यतते स त्रेता । तदनुग्रहार्थं रक्तोऽनुरक्तो मातृवद्भवति । यस्तु शुचिर्निशसिद्धत्यन्तं भक्तस्य

ब्रह्मण्यदेवः सर्वात्मा तैस्तैर्भावैर्विकुर्वति ॥ जगत्यतिगुणो देवो वैकुण्ठः सर्वभावनः ॥ २८ ॥ अतः समस्तदेवानां पूज्य एव स केशवः ॥ पद्मगर्भश्च भगवान्प्रजासर्गकरो विभुः ॥ २९ ॥ अनन्तो धारणार्थं च बिभर्ति च महद्यशः ॥ यज्ञ इत्यपि साद्भिश्च कथ्यते वेदवादिभिः ॥ ३० ॥ श्वेतः कृतयुगे देवो रक्तस्त्रेता युगे तथा ॥ द्वापरे च तथा पीतः कृष्णः कलियुगे विभुः ॥ ३१ ॥ अवधीत्स हिरण्याक्षं दिव्यरूपधरो हरिः ॥ दधाराप्सु निमज्जन्तीमेष देवो वसुंधराम् ॥ ३२ ॥ वाराहं वपुराश्रित्य जगतो हितकाम्यया ॥ जघ्ने हिरण्यकशिपुं नारसिंहवपुर्हरिः ॥ ३३ ॥ जिगाय जगतीं चैव विष्णुर्वामनरूपधृक् ॥ बबन्ध च बलिं देवः श्रीमान्पन्नगबन्धनैः ॥ ३४ ॥ देवदानवसंभूतामाक्रामयदपि श्रियम् ॥ त्वय्यनन्तः पुरा विष्णुरुदारोमितविक्रमः ॥ ३५ ॥ सावशेषं तपो यस्य तन्निहन्ति जनार्दनः ॥ अर्वाकेष्वपि वर्तन्तं व्रतमेतन्महात्मनः ॥ ३६ ॥ जघ्ने च दानवान्मुख्यान्देवानां ये च शत्रवः ॥ तव प्रियार्थं गोविन्दो धर्मनित्यः सतां गतिः ॥३७॥ रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् ॥ भूत्वा कामगुणांश्चैव जघान द्विरदं हरिः ॥ ३८ ॥ हिताय जगतोद्यापि लोके वसति मानुषे ॥ उपेन्द्रो जगतां नाथः सर्वभूतोत्तमोत्तमः ॥ ३९ ॥ जटी कृष्णाजिनी दण्डी दृष्टपूर्वो मया हरिः ॥ दैतेयेषु चरन्देवस्तृणेष्वग्निरिवोद्धतः॥४०॥अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् ॥ कुर्वाणं दानवैर्हीनं जगतो हितकाम्यया ॥४१॥ अवश्यं पारिजातं ते नयिष्यति जनार्दनः ॥ द्वारकाममरश्रेष्ठ नानृतं च ब्रवीम्यहम् ॥ ४२ ॥ भ्रातृस्नेहाभिभूतस्त्वं न कृष्णे प्रहरिष्यसि ॥ नापि कृष्णस्त्वयि ज्येष्ठे प्रहरिष्यति वासव ॥ ४३ ॥

कृतं तं प्रति शुक्लः । स्वीयं शुद्धमेव रूपं प्रकाशयतीति । यथाश्रुतव्याख्यानं तु सर्वेषु युगेषु सर्वेषां रूपाणां सत्वान्न युज्यत इति दिक् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ देवानां दानवानां च यत्नसंभृतां साधारणीमपि श्रियं त्वयि त्वन्निमित्तम् आक्रामयत् आक्रान्तवान् ॥ ३५ ॥ अर्वाकेषु मायासु वर्तमानमपि हन्त्येवेत्यर्थः ॥ ३६ ॥ ३७ ॥ भूत्वा आविर्भूय तेष्ववतारेषु कामगुणान्यथेष्टं शौर्यादिगुणयुक्तानसुरान्हरिर्द्विरदं सिंहो गजानिव जघान । द्विरदमित्येकत्वमार्षं लुप्तोपमा च॥ ३८॥३९॥४०॥४१॥४२॥४३॥

 ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ वृद्धानां वृद्धवाक्यानाम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ पुरातने वामनावतारे किं नारब्धं नाङ्गीकृतमपि त्वारब्धमेव ॥ ५३ ॥
 ॥ ५४ ॥ ॥ इति श्रीहरिवंशे विष्णुपर्वणि टीकायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ छ ॥ द्विसप्ततितमेऽध्याये ज्ञात्वेन्द्रस्य विचेष्टितम् ॥ कश्यपो रुद्रमस्तौषीत्सोम 

नैव चेच्छ्रोष्यति प्रोक्तं मया देव कथंचन ॥ पृच्छ त्वं नयधर्मज्ञान्ये हितास्तव मन्त्रिणः ॥ ४४ ॥ वैशम्पायन उवाच ॥ नारदेनैवमुक्तस्तु महेन्द्रो 
जनमेजय ॥ इदमुत्तरमीशोथ प्रत्युवाच जगद्गुरुम् ॥ ४५ ॥ एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज ॥ एवमेतत्सुबहुशः श्रुतं खलु मया मुने ॥४६॥
यतश्चैवंविधः कृष्णस्ततोहं तस्य वै तरुम् ॥ न प्रदास्यामि दातव्यं सतां धर्ममनुस्मरन् ॥ ४७ ॥ महाप्रभावो नाल्पार्थे रुष्येदिति विचिन्तयन् ॥
व्यवस्थितोहं भद्रं ते मुने सर्वगुणादिति ॥ ४८ ॥ महाप्रभावाः सततं भवन्ति हि सहिष्णवः ॥ श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषाम् ॥ ४९ ॥
महात्मा कारणे नाल्पे कृष्णो धर्मभृतां वरः ॥ भ्रात्रा ज्येष्ठेन सर्वज्ञो विरोधं गन्तुमर्हति ॥ ५० ॥ यथैव मम मातुः स वरं प्रादादधोक्षजः ॥ तथैव
तस्याः पुत्राणां ज्येष्ठानां सोढुमर्हति ॥ ५१ ॥ यथैवोपेन्द्रतां यातः स्वयमिच्छन् जनार्दनः ॥ तथैव भ्रातुरिन्द्रस्य सन्मानं कर्तुमर्हति ॥ ५२ ॥
ज्यैष्ठ्यमेतेन देवेन नारब्धं किं पुरातने ॥ अथेदानीमपीच्छेत्स ज्येष्ठोस्तु मधुसूदनः ॥५३॥ सुनिश्चितं बलरिपुमीक्ष्य नारदो विसर्जितस्त्रिदशवरेण
धर्मभृत् ॥ ययौ पुरीं यदुवृषभाभिरक्षितां कुशस्थलीं धृतिमतिमांस्तपोधनः ॥ ५४ ॥ ॥ इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्वणि पारि-
जातहरणे नारदस्य स्वर्गात्पुनरागमनं नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ वैशम्पायन उवाच ॥ अथैत्य द्वारकां रम्यां
नारदो मुनिसत्तमः ॥ ददर्श पुरुषश्रेष्ठं नारायणमरिंदमम् ॥ १ ॥ स्ववेश्मनि सुखासीनं सहितं सत्यभामया ॥ विराजमानं वपुषा सर्वतेजोतिगामिना
॥ २ ॥ तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतम् ॥ केवलं योजयन्तं च वाक्यमात्रेण भाविनीम् ॥ ३ ॥ दृष्ट्वैव नारदं देवः प्रत्युत्थाय अधोक्षजः ॥
पूजयामास च तथा विधिदृष्टेन कर्मणा ॥ ४ ॥ सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः ॥ वृत्तान्तं परिपप्रच्छ पारिजाततरुं प्रति ॥ ५ ॥ अथाच-
ष्ट मुनिः सर्वं विस्तरेण तपोधनः ॥ इन्द्रानुजायेन्द्रवाक्यं निखिलं जनमेजय ॥ ६ ॥ श्रुत्वा कृष्णस्तु तत्सर्वं नारदं वाक्यमब्रवीत् ॥ अमरावतीं पुरीं
यास्ये श्वोहं धर्मभृतां वर ॥ ७ ॥ इत्युक्त्वा नारदेनैव सहितः सागरं ययौ ॥ संदिदेश ततस्तत्र विविक्तो नारदं हरिः ॥ ८ ॥ महेन्द्रभवनं गत्वा 
अद्य ब्रूहि तपोधन ॥ अभिवाद्य महात्मानं मद्वाक्यममरोत्तमम् ॥ ९ ॥

इत्यभिधीयते ॥ १ ॥ अथैत्येति ॥ १ ॥ २ ॥ योजयन्तं भाविनीं सत्यभामाम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ १२ ॥ अहो एतदारब्धं कृत्यं धिगिति कृत्यनिन्दया कृत्यवन्तमेव धिक्करोतीति द्वयोः संबन्धः ॥ १३ ॥ अनाख्यात्वा अपृष्ट्वा आर्षो ल्यबभावः । मम मां प्रति ॥ १४ ॥ १५ ॥ लाघवं पराजयम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ सदृशीम् आत्मवच्छुद्धां देवशर्मणो गौतमगोत्रस्य भार्याम् अहल्याम् इच्छतः अन्यायेन कामयानस्य शतक्रतोरुपरि एव दोषः पराभवरूपः मुनेः अपध्यानजः मानुषं भावमगणयतस्तव मानुषादयं महद्भविष्यतीति मुनेरपध्यानं तज्जः ॥ २२ ॥

न युद्धे प्रमुखे शक्र स्थातुमर्हसि मे प्रभो ॥ पारिजातस्य नयने निश्चितं त्वमवेहि माम् ॥ १० ॥ एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः ॥ आचचक्षेथ कृष्णोक्तं देवेन्द्रस्यामितौजसः ॥ ११ ॥ ततो बृहस्पतेः शक्रः शशंस बलनाशनः ॥ श्रुत्वा बृहस्पतिर्देवमुवाच कुरुनन्दन ॥ १२ ॥ अहो धिग्ब्रह्मसदनं मयि याते शतक्रतो ॥ दुर्नीतमिदमारब्धमत्र भेदो हि दारुणः ॥ १३ ॥ अनाख्यात्वा कथं नाम भवता भुवनेश्वर ॥ ममैतत्कृत्यमारब्धं देव केनापि हेतुना ॥ १४ ॥ अथवा भवितव्येन कर्मजेन प्रयुज्यते ॥ जगद्वृत्तञ्च विविधं न शक्यमनिवर्तितुम् ॥ १५ ॥ सहसैव तु कार्याणामारम्भो न प्रशस्यते ॥ तदेतत्सहसारब्धं कार्यं दास्यति लाघवम् ॥ १६ ॥ बृहस्पतिं महात्मानं महेन्द्रस्त्वब्रवीद्वचः ॥ एवं गतेऽद्य यत्कार्यं तद्भवान्वक्तुमर्हति ॥ १७ ॥ तमुवाचाथ धर्मात्मा गतानागततत्त्ववित् ॥ अधोमुखश्चिन्तयित्वा बृहस्पतिरुदारधीः ॥ १८ ॥ यतस्व सह पुत्रेण योधयस्व जनार्दनम् ॥ तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति ॥ १९ ॥ बृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः ॥ आचष्ट मुनये सर्वं कश्यपाय महात्मने ॥ २० ॥ तच्छ्रुत्वा कश्यपः क्रुद्धो बृहस्पतिमभाषत ॥ अवश्यं भाव्यमेतद्धि सर्वथा नात्र संशयः ॥ २१ ॥ इच्छतः सदृशीं भार्यां महर्षेर्देवशर्मणः ॥ अपध्यानकृतो दोषः पतत्येष शतक्रतोः ॥ २२ ॥ तस्य दोषस्य शान्त्यर्थमारब्धश्च मुने मया ॥ उदवासः स दोषश्च प्राप्त एव सुदारुणः ॥ २३ ॥ तद्गमिष्यामि मध्येऽस्य सहादित्या तपोधन ॥ उभौ तौ वारयिष्यामि दैवं संवदते यदि ॥ २४ ॥ बृहस्पतिस्तु धर्मात्मा मारीचमिदमब्रवीत् ॥ प्रातःकाले त्वया तत्र भवितव्यं तपोधन ॥ २५ ॥ तथेति कश्यपश्चोक्त्वा संप्रस्थाप्य बृहस्पतिम् ॥ जगामार्चयितुं देवं रुद्रं भूतगणेश्वरम् ॥ २६ ॥ तत्र सौम्यं महात्मानमानर्च्य वृषभध्वजम् ॥ वरार्थी कश्यपो धीमानदित्या सहितः प्रभुः ॥ २७ ॥ तुष्टाव च तमीशानं मारीचः कश्यपस्तदा ॥ वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तुत्यं जगद्गुरुम् ॥ २८ ॥

यद्यप्यारब्धः तथापि प्राप्त एवेत्यध्याहृत्य योज्यम् ॥ २३ ॥ अस्य विरोधस्य मध्ये गमिष्यामि मध्यस्थो भूत्वा वारयिष्यामीत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ वेदोक्तैः स्वकृतैः स्वकृतिमिश्रैः ॥ २८ ॥

तानेवाह । उरुक्रममित्यादिना द्वात्रिंशद्भिः श्लोकैः । उरुक्रममिति विष्णोर्विशेषणम् । उरुर्महान् त्रैलोक्याक्रमणसमर्थः । क्रमः पादविक्षेपो यस्य स इति योगात् । [illegible] मनस्येव रुद्रे विष्ण्वभेदमन्तरेण संगच्छते । अभेदश्च तयोर्बिम्बप्रतिबिम्बभावेन वा शास्त्रदृष्ट्या चेत्यन्यदेतत् । एकस्यैव विश्वेश्वरस्य सर्वाणि नामानीत्येव तत्त्वम् । विश्वं कर्मकृतिसाध्यं यस्येति कुलालवन्निमित्तत्वमुक्तम् । जगत्स्रष्टारमिति कालादिसाधारणकारणरूपत्वम् । धर्मदृश्यं पुण्यप्राप्यं वरेशमनुग्राहकं कर्मकर्तॄणाम् । समित्युपसर्गस्य नमस्ये इत्यनेन संबन्धः । संनमस्ये इत्यर्थः । वेदे व्यवहिताश्चेति धातूपसर्गयोर्व्यवहितत्वस्मरणात् । सर्वं सर्वात्मकम् धृतिमद्धाम धृतिः सात्विकी । धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥ योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकीत्येवंलक्षणा । तद्वतां धाम स्वप्रकाशचैतन्यरूपमधिष्ठानं योगिनां निलयमित्यर्थः ॥ २९ ॥ आपः पुरुषवचसो भवन्तीति श्रुतेरपां कार्यं शरीरमपि उपाधिः स सर्वो यस्य गर्भं प्रतिबिम्बचैतन्यरूपं धारयित्र्यः दधति आपोगर्भ इति पाठेपि धारयित्र्यः । आपोपि यस्य गर्भः संकल्पोत्थस्तरङ्ग इत्यर्थः॥ ३० ॥ शालेति ।

कश्यप उवाच ॥ ॥ उरुक्रमं विश्वकर्माणमीशं जगत्स्रष्टारं धर्मदृश्यं वरेशम् ॥ ससर्वं त्वां धृतिमद्धाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये ॥ २९ ॥ यो देवानामधिपः पापहर्ता तं तं विश्वं येन जगन्मयत्वात् ॥ आपो गर्भं यस्य शुभा धरित्र्यो विश्वेश्वरं तं शरणं प्रपद्ये ॥ ३० ॥ शालावृकान्यो यतिरूपो निजघ्ने दत्तानिन्द्रेण प्रणुदो हितानाम् ॥ विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं शरणं यामि मूर्ध्ना ॥ ३१ ॥ भुङ्क्ते य एको विभुर्जगतो विश्वमग्र्यं धाम्नां धाम सुकृतित्वान्न धृष्यः ॥ पुष्यात्स मां महसा शाश्वतेन सोमपानां मरीचिपानां वरिष्ठः ॥ ३२ ॥ अथर्वाणं सुशिरसं भूतयोनिं कृतिनं वीरं दानवानां च बाधम् ॥ यज्ञे हुतिं यज्ञियं संस्कृतं वै विश्वेश्वरं शरणं यामि देवम् ॥ ३३ ॥ जगज्जालं विततं यत्र विश्वं विश्वात्मानं प्रीतिदेवं गतानाम् ॥ य ऊर्ध्वगं रथमास्थाय याति विश्वेश्वरः सुमना मेस्तु नित्यम् ॥ ३४ ॥

अरुन्मुखान्यतीन् शालावृकेभ्यः प्रयच्छमिति श्रुतेः । वेदान्तविचारहीनमजितेन्द्रियं यतिमिन्द्रः शालावृकैर्भक्षयति तानिन्द्रियशालावृकान्यः यतिरूपो जितेन्द्रियः सन्निजघ्ने हतवान् । हितानां शमदमादिरूपाणां मित्राणां प्रणुदः प्रणोदनपरान् अभिभावकान् । यामि शरणं मूर्ध्ना च प्रपद्ये नमस्करोमि ॥ ३१ ॥ य एको जगतो विभुः स्वामी अग्र्यं ज्येष्ठं विश्वं शुद्धान् जनान् भुङ्क्ते भुनक्ति पालयति । अग्र्यं सूक्ष्ममपि विश्वं भुङ्क्ते संहरति वा । धाम्ना चक्षुःसूर्यादीनां धाम प्रकाशं सुकृतित्वात् । तस्मात्तत्सुकृतमुच्यत इति श्रुतेः । सुकृतशब्दितब्रह्मरूपत्वात् न धृष्यः अभयरूप इत्यर्थः । पुष्यात् पोषयेत् । सोमपानां कर्मठानां मरीचिपानां चन्द्ररश्मिपानमात्रेण वर्तयतां महामुनीनां वरिष्ठः स्वर्गब्रह्मलोकादिस्थानप्रद इत्यर्थः ॥ ३२ ॥ अथर्वाणमथर्ववेदप्रतिपाद्यं सुशिरसं शिरः पञ्चकोशेति । भूतयोनिं जगत्कारणं बाधं बाधकम् ॥ ३३ ॥ यत्राधिष्ठाने जगज्जालं जगदिन्द्रजालं विततं विश्वं कृत्स्नं गतानां शरणं प्राप्तानां प्रीतिदेवं सुखप्रकाशकम् यत् यः ऊर्ध्वगमन्तरिक्षचरं रथं वाहनमास्थाय याति संचरति । सुमनाः सुखकरः ॥ ३४ ॥

